न्यायदीपः – तादृशेति ।। साक्षाज्जनकप्रतिबन्धकनाश्यादृष्ट इत्यर्थः । पटनुत्पत्तिमिति ।। तत्रापि कदाचित् त्वदुक्तादृष्टाभावसम्भवादिति भावः । एतच्चोपलक्षणम् । मणिकृदुक्तदिशा मण्यपसरणानन्तरं दाहाभावप्रसङ्गादन्वय-व्यतिरेकाभ्यां क्लृप्तत्वेन मण्याद्यभावरूपपदाहकारणाभावेनैव दाहाभावोपपत्तेश्चेत्यपि ध्येयम् ।।

**तर्कताण्डवम् – वन्ध्यापुंसम्प्रयोगादावपिसाक्षाज्जन्कादृष्टविलम्बान्न विलम्बः । किं तु नापुत्रस्य लोकोस्तीति श्रुत्याऽपुत्रस्य नरकोक्त्या तज्जनकस्य दुरितस्यावश्यकत्वेन दाहं प्रति मणेरिव दुरितस्यैव पुत्रोत्पत्तिप्रतिबन्धकत्वात् ।।**

न्यायदीपः – ननु वन्ध्यासंप्रयोगादौ दृष्टाव्यभिचाराददृष्टविलम्बो वाच्य इत्यत आह – वन्ध्येति ।।

**तर्कताण्डवम् – न चैवमदृष्टस्य कुत्रचिदपि साक्षाज्जनकत्वाभावे परम्परया जनकत्वमपि न स्यादिति वाच्यम् । दृष्टसामग्रीरहिते सर्गाद्यकालीने कार्येऽदृष्टस्य साक्षाज्जनकत्वस्वीकारात् ।।**

**अस्तु वा दाहादावपि साक्षाज्जनकमदृष्टं, तथापि न तन्मण्यादिविनाश्यम् ।**

**अदृष्टस्यादृष्टनाशकत्वेन विहितेतरफलमात्रनाश्यत्वात् । अन्यथा मण्यादिनाऽदृष्टनाशशङ्कयावैदिके कर्मणि निष्कम्पप्रवृत्तिर्न स्यात् ।।**

**न्यायदीपः** – नन्वदृष्टं क्वचित्साक्षाज्जनकम् । अन्यथा दृष्टसामग्रीरहितस्थले साक्षादहेतुत्वे दृष्टसामग्र्यामप्यहेतुत्वापत्त्या परम्परया हेतुरपि न स्यादतः कथं तादृशादृष्टं नेत्युच्यत इत्यत आह – **न चैवमिति** ।।

न तन्मण्या विनाश्यमिति । येन मण्यादेः प्रतिबन्धकत्वे शक्तिं विनाप्युपपन्नं स्यादिति दोषः कुतो नेत्यत आह – **अदृष्टस्येति** ।।

प्रबलदुरितादृष्टस्य पुण्यादृष्टनाशकत्वेन प्रबलपुण्यादृष्टस्य दुरितादृष्टनाशकत्वेन मण्यादेरनाशकत्वादित्यर्थः । अदृष्टस्य विहितादिजन्यत्वाद्विहितेतर-नाश्यत्वेपि फलमात्रनाश्यत्वेन मण्यादिरूपेण विपरितेतरेणानाश्यत्वादित्यर्थः । कीर्तनादेरप्युपलक्षणम्। 'धर्मः क्षरति कीर्तनात्' इत्यादेः ।

यद्वाऽदृष्टस्य नाश्यत्वादित्यन्वयः । अदृष्टनाशकत्वेन यद्विहितं प्रायश्चित्तादि तदितरेण फलमात्रेण नाश्यत्वादित्यर्थः । मण्यादि त्वदृष्टनाशकतया विहितेतरदपि न फलरूपमिति न तन्नाशकमिति भावः ।।

**तर्कताण्डवम् – नापि – मणिना दाहप्रतिपक्षादृष्टजननाद्दाह विलम्बः, प्रतिपक्षादृष्टजनने शौचाद्यनपेक्षादिति वाच्यम्। प्रतिपक्षादृष्टस्यापि मणितुल्यतया तद्विघटनीयत्वेनैव शक्तिसिद्धेः ।।**

**न्यायदीपः** – (द्वितीयं निराह) – **नापीति** ।। **प्रतिपक्षेति** ।। प्रतिकूलेत्यर्थः ।। शौचाचमनादेरभावे कथमदृष्टजन्मेत्यत आह – **प्रतिपक्षेति** ।।

ननु – 'प्रतिकूलादृष्टस्य मण्यादिजन्यस्य न शक्तिविघटकत्वेन दाहप्रतिबन्धकता, किं तु प्रतिकूलादृष्टान्तरजनकत्वेनेति चेत्, तर्ह्यनवस्थापत्तिः।

एवं तर्हि स्वाभावरूपदाहकारणविघटनरूपत्वेन प्रतिपक्षादृष्टस्य दाहप्रतिबन्धकतास्तु, इति चेन्न । एवं हि मण्यादेरेव तथात्वोपपत्तौ किं प्रतिपक्षादृष्टजन्मकल्पनया ।।

**तर्कताण्डवम् – नापि – मण्याद्यभावरूपदृष्टकारणाभावादेव दाहविलम्बः; अभावस्यापि भाववद्दाहकतौल्येन कारणत्वात्; त्वयापि विशेषदर्शनेन भ्रमस्य, विहिताकरणेन प्रत्यवायस्य, निर्दोषत्वादिना वेदप्रामाण्यादेश्च स्वीकृतत्वादिति वाच्यम् । उत्तेजकसमये मणिसत्वेपि दाहदर्शनेन मण्याद्यभावस्याहेतुत्वात् ।।**

न्यायदीपः – नन्वस्तु तर्हि तथैवेत्यतस्तृतीयं पक्षं सयुक्तिकमाशङ्क्य निराह – **नापीति** ।। वाच्यमित्यन्वयः । भाववत् भावस्य कारणत्ववत् ।

अभावस्य हेतुता न केवलं युक्तिसिद्धा प्रतिवादिसिद्धा चेत्याह – **त्वयापीति**।। अदर्शनाकरणनिर्दोषपदैरभावस्यैव प्रतीतेरिति भावः ।

आदिपदेन कुड्यसंयोगाभावस्य गतावनुपलब्धेश्चाभावज्ञाने हेतुत्वदृष्टेति गृह्यते । तस्मादित्युक्तमेव हेतुत्रयं व्यनक्ति – **मण्यादिनेति** ।।

**तर्कताण्डवम् – तस्मान्मण्यादिना प्रतिबन्धदशायां दाहजनकादृष्टस्य मण्यादिना नाशाद्वा मण्यादिना दाहप्रतिकूलादृष्टजननाद्वा मण्याद्यभावरूपदृष्टकारणविरहद्वा दाहानुत्पत्तिरिति लीलावत्याद्युक्तं पक्षत्रयमप्ययुक्तम् ।।**

लीलावत्याद्युक्तशक्त्यपलापप्रकारभङ्गः ।।

न्यायदीपः – तस्मादित्युक्तमेव हेतुत्रयं व्यनक्ति – **मण्यादिनेति** ।।

लीलावत्युक्तशक्त्यपलापभङ्गः ।।

## अथ शक्तौ श्रुत्यादिनिरूपणम् ।।

**तर्कताण्डवम् – अत्र नैयायिकाः – उत्तेजकाभावविशिष्टमण्याद्यभाव-रूपदृष्टकारणविरहादेव दाहानुत्पत्त्युपपत्तेर्न शक्तिसिद्धिः ।।**

न्यायदीपः – यत्त्वनुमानखण्डे मणावीश्वरवादानन्तरं लीलावत्याद्यभिमतशक्त्य पलापप्रकारं निरस्य स्वयं प्रकारान्तरेणापलापप्रदर्शनं कृतं तदप्युच्यत इत्यादिना न युक्तमिति वक्तुमनुवदति – **अत्र नैयायिका** इत्यादिना – **तस्मान्न शक्तिरित्यन्तेन**। उत्तेजकं प्रतिबन्धकप्रतिबन्धकं, – तदभावविशिष्टो यो मण्यादिस्तदभावेत्यर्थः ।

**तर्कताण्डवम् – ननु मण्याद्यभावानां न तावन्मण्याद्यभावत्वेन कारणत्वम् । अननुगमात् ।**

न्यायदीपः – मण्याद्युक्तं मणिमन्त्रौषधाद्यभावानां कूटस्य कारणत्वं शङ्कोत्तराभ्यां व्यनक्ति – **नन्वित्यादिना** ।।

**तर्कताण्डवम् – नापि प्रतिबन्धकाभावत्वेन अन्योन्याश्रयात् । कारणीभूताभावप्रतियोगिन एव प्रतिबन्धकत्वात् ।**

**मन्त्रसत्वेपि मण्यभावमात्रेण दाहापत्तेश्च । तस्यापि प्रतिबन्धकाभावत्वात् ।**

**न हि यावत्कारणसमवधान एव कार्यम् । एकदण्डसमवधानेपि घटोत्पत्तेरिति चेत्;**

**मैवम् । दण्डचक्रादिकूटवत् सकलानां मण्यादीनां संसर्गाभावकूटस्य दाहजनकत्वेनाननुगमान्योन्याश्रययोरभावात् ।।**

न्यायदीपः – अन्योन्याभावव्यावृत्त्यर्थं प्रागभावादिसाधारणाभावलाभं चाह – संसर्गाभावकूटस्येति ।।

**तर्कताण्डवम् – एतेन – दाहकाले सकलानां मण्यादिसंसर्गाभावानां कूटोऽसम्भवी, मणिध्वंसकाले तत्प्रागभावस्यासम्भवादिति निरस्तम् । साकल्यस्य प्रतियोगिविशेषणत्वेनोक्ततया सर्वेषां मण्यादीनामेकैकस्य संसर्गाभावस्य दाहकाले सत्वेन तादृशाभावे कूटस्यापि तत्काले सत्वात् ।।**

न्यायदीपः – सकलपदस्य मण्यादेर्विशेषणत्वेनोक्तौ कृत्यं व्यनक्ति – एतेनेति ।। एतच्छब्दार्थं स्फुटीकरोति – साकल्यस्येति ।। अभावविशिषेणत्वे हि स्यात् त्वदुक्तदोषः, न चैवमित्यर्थः ।

**तर्कताण्डवम् –किञ्च कार्यानुत्पत्तिव्याप्यत्वं प्रतिबन्धकत्वमिति पक्षे प्रतिबन्धकत्वावच्छिन्नाभावः कारणम् । स च यत्किञ्चित्प्रतिबन्धकसत्वदशायां नास्तीति न तदा दाहप्रसङ्गः!**

न्यायदीपः – प्रतिबन्धकाभावत्वेन कारणत्वेपि न प्रागुक्तदोष इति भावेन 'यद्वा प्रतिबन्धकत्वावच्छिन्नप्रतियोगिकोऽभावः कारणम्' इत्यादिना मण्युक्तमेवाह – किञ्चेति ।।

कार्यानुत्पत्तिः कार्यप्रागभावो व्याप्तिश्च कालिकीति भावः । **प्रतिबन्धकत्वावच्छिन्नाभावेति** ।। मणिमन्त्राद्यनुगतप्रतिबन्धकत्वावच्छिन्नप्रतियोगिताकाभावत्वेन मण्याद्यभावस्य कारणत्वमित्यर्थः ।।

मन्त्रसत्वेपि मण्याद्यभावमात्रेण दाहापत्तिरूपप्रागुक्तदोषो नेत्याह – **स चेति** ।। मन्त्रसत्वस्थळे मणित्वाद्यवच्छिन्नाभावसत्वेपि एकप्रतिबन्धकसत्वे प्रतिबन्धकत्वावच्छिन्नाभावो नेति न दाहप्रसङ्गदोष इति भावः ।।

**तर्कताण्डवम् – नाप्यन्योन्याश्रयाननुगमौ । 'प्रहरं मा दह' इति सावधिमन्त्रपाठे मन्त्रस्य झडिति नाशेपि मन्त्रप्रयोक्तृपुरुषाभिप्रायविषयः कालविशेष एव प्रतिबन्धक इति न कोपि दोषः । तस्मान्न शक्तिसिद्धिरिति ।**

न्यायदीपः – **नाप्यन्योन्याश्रयेति** ।। कारणीभूताभावप्रतियोगित्वपक्ष एवास्य दोषस्योक्तेरिति भावः ।। ननु व्यभिचारात् कथं मन्त्राद्यभावः कारणमित्यतो व्यभिचारं निराह – **प्रहरमिति** ।।

निषेधार्थकमाशब्दोऽयम् । न माङ् । तेन 'माङि लुङि'ति लुङा भाव्यमिति न शङ्क्यम् ।

**तर्कताण्डवम् – उच्यते –**

**'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ...'**

**विचित्रशक्तिः पुरुषः पुराणो, न चान्येषां शक्तयस्तादृशाः स्युः**

सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुः'

इत्यादि श्रुत्या

'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ।।

इत्यादिस्मृत्या च शक्तिसिद्धेः ।।

न्यायदीपः – मण्यादेः प्रतिबन्धकत्वान्यथानुपपत्तिरूपार्थापत्तेर्नैयायिकोक्तान्यथोपपत्तिं अग्रे निरसिष्यन्, एकत्र शक्तिसिद्धौ अन्यत्र शब्दादावपि तदनुमानमिति भावेन, परमेश्वरे शक्तिसत्वे तावत् –

'ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः ।
नित्यानन्दोऽव्ययः पूर्णो भगवान् विष्णुरुच्यते ।।
इति पैङ्गिश्रुतिश्चाह शक्तिसद्भाव एव तु' –
(अत्तृत्वाधिकरणम् - १/२/)

इत्यत्राधिकरणानुव्याख्यानाद्युक्तदिशा श्रुत्यादिरूपमानोक्त्या 'शक्तौ मानं न' इत्येतावत् तावन्निराकरोति – परास्येति ।।

अस्य भगवत इत्यर्थः । 'ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रिया चे'ति विग्रहः ।

विचित्रेति वाक्यान्तरम् । तादृशास्तादृश्यः । सर्वैर्युक्तेति वाक्यान्तरम्। सर्वैः = सर्वाभिः । लिङ्गव्यत्ययात्।।

'परेति यां प्राहुरजस्रशक्तिम् ।'

इति वाक्यशेषः ।

एता 'आत्मनि चैवं विचित्राश्च हि' इत्यादि सूत्रभाष्योक्ताः । तावता न सर्ववस्तुषु शक्तिलाभ इत्यतो रामानुजभाष्योक्तविष्णुपुराणस्मृतिमाह – शक्तय इति ।।

सर्गाद्याः सृष्ट्यादिविषया भावशक्तयः भावरूपशक्तय इति वा स्वभावशक्तय इति वाऽर्थः ।

**तर्कताण्डवम् – न चेयं स्वरूपमात्रपरा । अस्येति षष्ठ्या, विचित्रशक्तिरिति बहुव्रीहिणा, शक्तिभिर्युक्तेति युक्तशब्देन सम्बन्धत्वेन, विविधैवेति विचित्रेति च बहुविधत्वेन, शक्तिभिः शक्तय इति बहुत्वेन चोक्तेः ।।**

**तर्कताण्डवम् – नाप्यगन्तुकसहकारिपरा ।**

**'न तस्य कार्यं करणं च विद्यते ।'**

**इति वाक्यशेषे सहकारिनिषेधात् स्वाभाविकत्वाजस्रत्वयोरुक्तेश्च ।**

न्यायदीपः – श्रुत्यादेरन्यथोपपत्तिं निराह – **न चेयमित्यादिना ।।**

**वाक्यशेष इति ।।** परास्य शक्तिरित्यस्य पूर्ववाक्ये 'न तस्य कार्यं कारणञ्च विद्यते' इत्युक्तेरित्यर्थः ।

तर्कताण्डवम् – नापि प्रतिबन्धकाभावपरा । भावत्वोक्तेः । 'अचिन्त्यज्ञानगोचराः' इति बीजादिनिष्ठशक्तेरप्यतीन्द्रियत्वोक्तेश्च।।

अन्योन्यानन्तरबलाः क्रमादेव प्रकीर्तिताः ।।

इत्यादिस्मृत्या इदमिह शक्तं, इदं शक्ततरं, इदं तु शक्ततममिति लोकव्यवहारेण गुरुत्वादाविव शक्तौ तारतम्यप्रतीतेश्च ।।

इति शक्तौ श्रुत्यादिनिरूपणम् ।।

न्यायदीपः – इत्यादिस्मृत्येति ।।

'भीमश्च बलभद्रश्च मद्रराजश्च वीर्यवान् ।।
चतुर्थः कीचकस्तस्मात् पञ्चमं नानुशुश्रुमः' इति ।।

अन्योन्यानन्तरेति ।। विराटपर्वगतस्मृत्येत्यर्थः । तारतम्यप्रतीतेश्चेयं नाभावपरेत्यन्वयः । अभावे तारतम्याभावादिति भावः ।।

।। इति शक्तौ श्रुत्यादिनिरूपणम् ।।

## अथ शक्तावर्थापत्तिपञ्चकम् ।।

**तर्कताण्डवम् – किञ्च दण्डादेरन्वयव्यतिरेकाभ्यां घटादिकारणत्वं तावदनुमीयते । तत्र न तावत् पूर्ववृत्तित्वमात्रं लिङ्गम् । रासभादावपि सत्वात् ।।**

न्यायदीपः – श्रुत्याद्यनुग्राहकार्थापत्तिरपि शक्तौ मानत्वेन विवक्षुरादौ कारणत्वस्यान्वयव्यतिरेकगम्यत्वान्यथानुपपत्तिरूपार्थापत्तिं सुधोक्तां तावद् व्यनक्ति – **किञ्च दण्डादेरिति** ।।

**अनुमीयत इति** ।। तस्य प्रत्यक्षत्वे घटादिप्रत्यक्षस्येव अन्वयाद्यपेक्षा न स्यात्। 'कारणत्वमेव शक्तिपदार्थः' इति कारणतावादे मणिकृदुक्त्यातीन्द्रियत्वावगतेश्चेति भावः ।

अन्वयव्यतिरेको नाम अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपो यस्मिन् सति यन्नियतं यदभावे च यदभावो नियत इत्येवंरूपत्वादन्वयव्यतिरेकयोः । एवं च तत्र कारणत्वानुमापकं किं विशेष्यमात्रं ? नियमविशेषितं विशेष्यं वा ? कृत्स्नं विशिष्टं वा ? आद्ययोः साध्याविशिष्टत्वदोषाभावेपि व्यभिचारान्न लिङ्गत्वमित्याह – **तत्र न तावदिति** ।।

**तर्कताण्डवम् – नापि नियमविशेषितम् । अन्यथासिद्धेपि सत्वात्।**

न्यायदीपः – **अन्यथासिद्धेपीति** ।। घटाकारणे तद्भतरूपकारणे मृत्पिण्डरूप इत्यर्थः। **कारणतात्वेनेति** ।।

**तर्कताण्डवम् – तस्मात् प्रत्यक्षसिद्धं कारणतात्वेन त्वदभिमतम् अनन्यथासिद्धनियतपूर्ववृत्तित्वमेव लिङ्गं वाच्यम् ।**

**नच तदेव तेन अनुमेयमिति तदनुमेयातीन्द्रियशक्तिसिद्धिः ।**

न्यायदीपः – कारणतात्वरूपत्वेनेत्यर्थः ।।

**तर्कताण्डवम् – न च तत्र स्वरूपयोग्यतारूपं दण्डत्वमनुमेयम् । तस्य प्रत्यक्षत्वात् ।**

न्यायदीपः – कारणत्वस्योक्तरूपलिङ्गानुमेयान्यथानुपपत्तिरूपार्थापत्तेरन्यथोपपत्तिं त्रेधाऽऽशङ्क्य निराह – **न चेत्यादिना** ।।

**तर्कताण्डवम् – नापि – सहकारिसमवधानरूपं फलोपधानमनुमेयम्। दण्डे सहकार्यसमवधानेऽपि तद् व्यवहारात् । शिलादौ तत्समवधानेऽपि कारणत्वाव्यवहाराच्च ।।**

न्यायदीपः – कारणतावच्छेदकस्यैव स्वरूपयोग्यतारूपत्वात् दण्डत्वमित्युक्तम् ।

**तर्कताण्डवम् – नापि दण्डत्वस्यानन्यथासिद्धिविशिष्टनियमावच्छेदकत्वमनुमेयम् । तस्य हेतुशरीर एव प्रवेशात् ।**

न्यायदीपः – **तस्येति** ।। 'उक्तरूपावच्छदेकस्य' इत्यर्थः । अनन्यथासिद्ध-नियतपूर्ववृत्तित्वान्यूनानधिकवृत्तित्वस्य हेतुत्वेन वाच्यत्वात् तस्यैवोक्त-रूपावच्छेदकत्वादिति भावः ।

तर्कताण्डवम् – **एतदेवाभिप्रेत्योक्तं सुधायाम् – 'ततोऽन्वय-व्यतिरेकसमधिगम्यमतीन्द्रियमेव किञ्चिन्मृदादीनां घटादि-कारणत्वमभ्युपगमनीयम् । तदेव च शक्तिः' इति ।।**

न्यायदीपः – **सुधायामिति** ।। 'अत्ता चराचरग्रहणात्' इत्यधिकरणे –

**इति पैङ्गिश्रुतिश्चाह शक्तिसद्भाव एव तु ।**

इत्यादिश्लोकव्याख्यानावसर इति ध्येयम् ।।

तर्कताण्डवम् – **व्याप्तिग्राहकप्रत्यक्षेण तु नियमरूपा रसरूपादि-साधारणी व्याप्तिरेव गृह्यते । न तु शक्तिरूपाकारणता । तस्या नित्यातीन्द्रियत्वात् ।।**

न्यायदीपः – ननु – 'वह्न्यादौ सति दाहादिः, तदभावे तदभावः' इति दाहादेर्वह्न्यादिना व्याप्तिग्राहकप्रत्यक्षेणैव दाहकारणता गृह्यत इति कथमनुमेयतोक्तिः । एतदन्यथाऽनुपपत्त्या शक्तिसिद्धिरित्यत आह – **व्याप्तीति** ।।

तर्कताण्डवम् – **नच व्यभिचरितं सहचारदर्शनं नियमरूपव्याप्तेरपि कथं ग्राहकम्, ग्राहककोटौ नियमप्रवेशे चात्माश्रय इति वाच्यम् ।**

न्यायदीपः – ननु व्याप्तिरेव गृह्यत इत्ययुक्तम् । सहचारदर्शनस्य वा नियतसहचारदर्शनस्य वा तदनिर्णायकत्वादित्याशङ्क्य समाधत्ते – **न चेति** ।।

**तर्कताण्डवम् – तस्य अञ्जनादिवद्व्याप्तिग्राहकप्रत्यक्षसहकारित्वेनाव्यभिचारानपेक्षणात् ।।**

न्यायदीपः – तस्य 'सहचारदर्शनस्य' इत्यर्थः ।।

**तर्कताण्डवम् – किञ्च जलस्य जलत्वेन पिपासोपशामकत्वं तावदनुमीयते। तत्र च न तावत् फलोपधानमनुमेयम् ।**

**बाधाद्व्यभिचाराच्च । किं तु पिपासोपशमनकारणत्वमात्रम् । तच्च न तावदन्यथासिद्धनियतपूर्ववृत्तित्वरूपम् । तस्य पूर्वमेव ज्ञातत्वात्। कथमन्यथा जलत्वस्य व्याप्तिग्रहः ।।**

न्यायदीपः – जलस्य पिपासोपशामकत्वानुमित्यन्यथानुपपत्तिश्च शक्तौ मानमिति भावेनाह – **किञ्चेति** ।।

अर्थापत्तेरन्यथोपपत्तिं निराह – **तत्र चेति** ।। **किं त्वित्यादिना** वक्ष्यमाणपक्षापेक्षया तावच्छब्दः ।

**बाधादिति** ।। तत्रानुमित्यनन्तरं प्रवृत्तस्य जलपानानन्तरमेवोदन्यनिवृत्तिरूपफलोपलम्भात् कचिदप्रवृत्तिपानाभावायोरपि सम्भवाच्चेति भावः ।

**व्यभिचारादिति** ।। जलत्वोपेतस्य सर्वस्याप्युक्तफलोपधाने मानाभावात्, प्रत्यग्रोत्पन्नविनष्टजले फलोपधानाभावाच्च व्यभिचार इति भावः ।।

**तर्कताण्डवम् – नापि सहकारिविरहप्रयुक्तकार्याभाववत्व रूपम् । सहकारिशब्देन स्वेतरकारणस्यैव विवक्षणीयत्वेनात्माऽश्रयात् । भाविसहकारिविरहशङ्कया फलार्थिनो निष्कम्पप्रवृत्त्ययोगात् ।**

न्यायदीपः – प्रकारान्तरेण पिपासोपशमकारणत्वस्वरूपमाशङ्क्य निराह – **नापीति** ।। सहकारिविरहप्रयुक्तः सहकारिविरहेणोत्तरसमयसम्बन्धविशिष्टतया जन्यो यस्तृप्तिरूपकार्यस्य प्रागभावः तद्वत्त्वं पिपासोपशमनकारणत्वमित्यर्थः ।

**तर्कताण्डवम् – तावता त्वदुक्तनिर्वचनस्य सहकारिविरहः कार्यप्रागभावस्योत्तरकालसम्बन्धकारणमित्येतदर्थकतया कारणत्वमज्ञात्वा कार्याभावस्य सहकारिविरहप्रयुक्तत्वस्य ज्ञातुमशक्यतया आत्माश्रयाच्च ।**

न्यायदीपः – **तावता त्वदुक्तनिर्वचनस्येति** । इत्येतदर्थकतया इत्यन्वयः । **आत्माश्रयेति** ।। कारणत्वरूपनिर्वचने कारणपदप्रवेशादित्यर्थः ।

**तर्कताण्डवम् – प्रागभावेऽव्याप्तेश्च । सहकारिसाकल्यसमवधान-दशायां दण्डादेरहेतुत्वापाताच्च ।**

न्यायदीपः – **प्रागभाव इति** ।। घटादिकारणीभूतप्रागभावस्य प्रागभावान्तराभावात् तत्र सहकारिविरहप्रयुक्तघटप्रागभावरूपकार्याभाववत्त्व-रूपत्वदुक्तकारणत्वा भावात् घटादिप्रागभावेऽव्याप्तेरित्यर्थः ।

**दण्डादेरहेतुत्वेति** ।। तदा प्रागभावसत्वेपि तस्य सहकारिविरहप्रयुक्तत्वा-भावात् । न चेष्टापत्तिः । सर्वदा तत्र हेतुत्वव्यवहारादिति भावः ।

**तर्कताण्डवम् – तस्मादतीन्द्रियं शक्तिरूपं कारणत्वमेवानुमेयमिति शक्तिसिद्धिः ।।**

**एतदप्युक्तं सुधायां – 'ततोऽतीन्द्रियमेव' इत्यादिना ।।**

न्यायदीपः–तस्मादिति ।। 'पिपासोपशमनकारणत्वस्य शक्तितोऽन्यस्यायोगात्' इत्यर्थः ।।

तर्कताण्डवम् – **किञ्चानन्यथासिद्धनियतपूर्ववृत्तित्वमेव कारणत्वं चेद् रासभादौ तदभावो न तावदन्यथासिद्ध्या । नियतपद-वैयर्थ्यात्।।**

न्यायदीपः – रासभादेरकारणत्वान्यथाऽनुपपत्त्या च शक्तिसिद्धिरिति भावेनाह – **किञ्चानन्यथेति** ।। 'चेत्' इत्यनन्तरं 'रासभादेर्घटादिकं प्रति कारणत्वाभावो न स्यात्' इति शेषः । कुतो न स्यात्? इत्यत आह – **रासभादावित्यादि** ।।

तर्कताण्डवम् – **नापि – पूर्ववृत्तित्वस्यानियतत्वेन । व्यक्त्यपेक्षया नियमस्य दण्डादावप्यभावात् । जात्यपेक्षया नियमस्य च रासभेऽपि प्रसङ्गात् । सम्भवति ह्यनादौ संसारे घटजातीयाद् रासभजातीयस्य कदाचिदपि व्यवहितपूर्ववृत्तित्वनियमः ।।**

न्यायदीपः – **पूर्ववृत्तित्वस्यानियतत्वेनेति** ।। 'रासभादौ तदभावः' इत्यनुषङ्गः। 'किं व्यवहितपूर्ववृत्तित्वस्यानैयत्येन रासभादौ कारणत्वाभावोऽनभिमत उत अव्यवहितपूर्ववृत्तित्वस्यानैयत्येन' इति ।। आद्ये रासभादावतिप्रसङ्गं व्यानक्ति – **सम्भवति हीति** ।।

तर्कताण्डवम्– **नाप्यव्यवहितपूर्ववृत्तित्वस्यानियतत्वेन। व्यवहित-नियतपूर्ववर्तिनो यागादेः स्वर्गाद्यहेतुत्वापातात् । सापूर्वस्य यागस्याव्यवहितत्वमस्तीति चेन्न ।**

न्यायदीपः – प्रकारान्तरेण पिपासोपशमकारणत्वस्वरूपमाशङ्क्य निराह – **नापीति** ।। सहकारिविरहप्रयुक्तः सहकारिविरहेणोत्तरसमयसम्बन्धविशिष्टतया जन्यो यस्तृप्तिरूपकार्यस्य प्रागभावः तद्वत्वं पिपासोपशमनकारणत्वमित्यर्थः ।

**तर्कताण्डवम् – तावता त्वदुक्तनिर्वचनस्य सहकारिविरहः कार्यप्रागभावस्योत्तरकालसम्बन्धकारणमित्येतदर्थकतया कारणत्वमज्ञात्वा कार्याभावस्य सहकारिविरहप्रयुक्तत्वस्य ज्ञातुमशक्यतया आत्माश्रयाच्च ।**

न्यायदीपः – तावता त्वदुक्तनिर्वचनस्येति । इत्येतदर्थकतया इत्यन्वयः । आत्माश्रयेति ।। कारणत्वरूपनिर्वचने कारणपदप्रवेशादित्यर्थः ।

**तर्कताण्डवम् – प्रागभावेऽव्याप्तेश्च । सहकारिसाकल्यसमवधान-दशायां दण्डादेरहेतुत्वापाताच्च ।**

न्यायदीपः – **प्रागभाव** इति ।। घटादिकारणीभूतप्रागभावस्य प्रागभावान्तराभावात् तत्र सहकारिविरहप्रयुक्तघटप्रागभावरूपकार्याभाववत्व-रूपत्वदुक्तकारणत्वा भावात् घटादिप्रागभावेऽव्याप्तेरित्यर्थः ।

दण्डादेरहेतुत्वेति ।। तदा प्रागभावसत्वेपि तस्य सहकारिविरहप्रयुक्तत्वा-भावात् । न चेष्टापत्तिः । सर्वदा तत्र हेतुत्वव्यवहारादिति भावः ।

**तर्कताण्डवम् – तस्मादतीन्द्रियं शक्तिरूपं कारणत्वमेवानुमेयमिति शक्तिसिद्धिः ।।**

**एतदप्युक्तं सुधायां – 'ततोऽतीन्द्रियमेव' इत्यादिना ।।**

न्यायदीपः–तस्मादिति ।। 'पिपासोपशमनकारणत्वस्य शक्तितोऽन्यस्यायोगात्' इत्यर्थः ।।

**तर्कताण्डवम् – किञ्चानन्यथासिद्धनियतपूर्ववृत्तित्वमेव कारणत्वं चेद् रासभादौ तदभावो न तावदन्यथासिद्ध्या । नियतपद-वैयर्थ्यात्।।**

न्यायदीपः – रासभादेरकारणत्वान्यथाऽनुपपत्त्या च शक्तिसिद्धिरिति भावेनाह – **किञ्चानन्यथेति** ।। 'चेत्' इत्यनन्तरं 'रासभादेर्घटादिकं प्रति कारणत्वाभावो न स्यात्' इति शेषः । कुतो न स्यात्? इत्यत आह – **रासभादावित्यादि** ।।

**तर्कताण्डवम् – नापि – पूर्ववृत्तित्वस्यानियतत्वेन । व्यक्त्यपेक्षया नियमस्य दण्डादावप्यभावात् । जात्यपेक्षया नियमस्य च रासभेऽपि प्रसङ्गात् । सम्भवति ह्यनादौ संसारे घटजातीयाद् रासभजातीयस्य कदाचिदपि व्यवहितपूर्ववृत्तित्वनियमः ।।**

न्यायदीपः – **पूर्ववृत्तित्वस्यानियतत्वेनेति** ।। 'रासभादौ तदभावः' इत्यनुषङ्गः। 'किं व्यवहितपूर्ववृत्तित्वस्यानैयत्येन रासभादौ कारणत्वाभावोऽनभिमत उत अव्यवहितपूर्ववृत्तित्वस्यानैयत्येन' इति ।। आद्ये रासभादावतिप्रसङ्गं व्यानक्ति – **सम्भवति हीति** ।।

**तर्कताण्डवम्–नाप्यव्यवहितपूर्ववृत्तित्वस्यानियतत्वेन। व्यवहित-नियतपूर्ववर्तिनो यागादेः स्वर्गाद्यहेतुत्वापातात् । सापूर्वस्य यागस्याव्यवहितत्वमस्तीति चेन्न ।**

**पूर्वं प्रतीतेन यागस्य स्वर्गहेतुत्वेन पश्चादपूर्वस्य कल्पनीयतया तदव्यवहितत्वस्य कारणत्वशरीरे प्रवेशायोगात् । अन्यथाऽपूर्वं वाच्यं स्यात् ।।**

न्यायदीपः – अन्त्यं निराह – **नापीति** ।। 'अनियतत्वेन' इत्यनन्तरं पूर्ववदनुषङ्गः । **सापूर्वस्येति** ।। 'अपूर्वसहितस्य' इत्यर्थः । **तदिति** ।। 'अपूर्वव्यवहितस्य' इत्यर्थः । **वाच्यं स्यादिति** ।। 'त्वन्मत इष्टसाधनत्वस्यैव लिङ्गादिवाच्यतया गुरुमत इवापूर्वस्य लिङ्गादिवाच्यत्वाभावात् । सापूर्वस्य स्वर्गाव्यवहितपूर्ववृत्तित्वरूपकारणत्वस्य यागनिष्ठस्य विध्यर्थत्वेऽपूर्वमपि लिङादिवाच्यम् स्यात् न त्वर्थापत्तिकल्प्यम्' इत्यपसिद्धान्त इति भावः ।

**तर्कताण्डवम् – तस्मादतीन्द्रियशक्तिरेव कारणत्वम् । तां च प्रति स्वाश्रयजातीयस्य फलाव्यवधानं व्यापकम् । यागस्य च भोजनादेस्तृप्तिं प्रतीव स्वर्गं प्रति स्वरूपेणाव्यवधानं न सम्भवतीत्यनुभवस्य स्मृतिं प्रतीव व्यापारद्वाराऽव्यवधानं वक्तव्यमित्यपूर्वकल्पना युक्ता ।।**

**एतदप्युक्तं सूधायाम् – अतीन्द्रियमेवेत्यादिना ।।**

न्यायदीपः – **शक्तिरेवेति** ।। तथा च रासभादौ तदभावादेव कारणत्वाभाव इति नातिप्रसङ्ग इति भावः । नापि यागादावव्याप्तिप्रसङ्गादित्यत आह – **तां चेति** ।। शक्तिं चेत्यर्थः । 'स्वाश्रयस्य' इत्येवोक्तौ अरण्यस्थदण्डे व्यभिचारः स्यात् अतः 'स्वाश्रयजातीयस्य' इत्युक्तिः । **एतदपीति** ।। 'रासभादेश्च अकारणत्वान्यथानुपपत्त्याऽपि अतीन्द्रियशक्तिसिद्धिरित्येतदपि' इत्यर्थः ।।

**तर्कताण्डवम् – नन्वेवं शक्तिः कारणत्वं चेत्सा कारणं न स्यात् । तथाच शक्तिर्दाहानुकूला न स्यादिति चेन्न ।**

न्यायदीपः – शक्तेः कारणत्वरूपत्वे बाधकमाशङ्क्य निराह – **नन्वेवमिति ।।**

**तर्कताण्डवम् – कारणत्वस्यापि कारणस्येव कार्यप्रागभाव-व्याप्यप्रागभावप्रतियोगित्वरूपानुकूलत्वाश्रयत्वात् ।।**

न्यायदीपः – **व्याप्येति** ।। व्याप्तिः कालिकी ध्येया । दण्डादेः कारणस्येव तच्छक्तेरपि तादृशप्रागभावप्रतियोगित्वादिति भावः ।

**तर्कताण्डवम् – केचित्तु – प्रतिबन्धकाभावत्वेन कारणत्वेऽन्योन्या श्रयान्मण्याद्यभावकूटस्य कारणता त्वयोक्ता । तथाचाननुगतानां तावदभावानां कारणतातत्तदनन्तनिष्ठानन्तधर्माणां कारणतावच्छेदकत्वमिति कल्पनात् वरं शक्तिकल्पनम् । अन्यथा तवापि समवायो न सिध्येत् । क्लृप्तैरनन्तैः स्वरूपसम्बन्धैरेव विशिष्टप्रतीत्युपपत्तेरित्याहुः ।।**

न्यायदीपः – प्रकारान्तरेण शक्तिसिद्धिमन्यापदेशेनाह – **केचित्त्विति।। अन्योन्येति** ।। 'मण्याद्यभावानां प्रतिबन्धकाभावत्वे ज्ञाते तदभावानां कारणत्वज्ञानं कारणत्वज्ञाने च सति कारणीभूताभावप्रतियोगित्वरूप-प्रतिबन्धकत्वज्ञानं सति च तस्मिन् प्रतिबन्धकाभावत्वेन तदभावानां कारणत्वज्ञानम्' इत्यन्योन्याश्रयाद्धेतोरभाव कूटस्य कारणता त्वयोक्तेत्यर्थः ।।

ततश्च किम् ? इत्यतः स्वाभिमतसाध्यमाह – **तथाचेति** ।। 'अभावकूटस्य कारणत्वे सति' इत्यर्थः । अन्यथा कल्पनागौरवानादर इत्यर्थः ।

**तवापीति** ।। 'जातिगुणक्रियाविशिष्टप्रतीतयो विशेषणसम्बन्धनिमित्तका इत्यादिरूपेण समवायमनुमिमानस्य तव' इत्यर्थः ।

अत्र पक्षेऽरुचिबीजं तु 'प्रतिबन्धकाभावानां वक्ष्यमाणदिशा विशिष्टविधित्वादिनाऽनुगतिपक्षेऽस्य दोषस्याभावात् अन्यथानुपपत्त्या शक्तिकल्पनानवकाशः' इति बोध्यम् । तथाऽपि तत्परीत्या परस्यापादनसम्भवादे-तत्पक्षावतार इत्यदोषः ।।

तर्कताण्डवम् – **किञ्चैवमुत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वं स्वीकृत्य शक्त्यपलापे प्रायश्चित्ताभावसहकृतसन्ध्यावन्द-नाद्यकरणस्य नरकहेतुत्वसम्भवात् तत् निवर्त्यमपि दुरितापूर्वं न सिध्येत्।।**

न्यायदीपः – अपूर्वप्रतिबन्ध्याऽपि शक्तिं साधयति – **किञ्चैवमिति** ।। पूर्वत्र श्रुत्यादिनिरूपणवादे 'अत्र नैयायिकाः' इत्यादिनोक्तरीत्य इति एवं शब्दार्थः ।

तर्कताण्डवम् – **(एवं ज्योतिष्टोमादिजन्यम्) अपूर्वमपि न सिध्येत् । अन्वयव्यतिरेकाभ्यां साङ्गयागप्रागभाव-विशिष्टात्माभावस्यैव स्वर्गादिफलहेतुत्वोपपत्तेः । आत्मनः स्थायित्वेन विशेष्याभावाभावेपि प्रागभावरूपविशेषणाभावेन विशिष्टाभावसम्भवात् ।।**

न्यायदीपः – **अपूर्वमपीति** ।। 'यागजन्यापूर्वमपि' इत्यर्थः । 'कथं तर्हि चिरध्वस्तयागादेः स्वर्गादिहेतुता' इत्यत आह – **अन्वयेति** ।।

उपपत्तेरित्येतद्व्यनक्ति – **आत्मन इति ।।** इष्टापूर्तादिकारिणो यजमानात्मनः स्थायित्वेऽपि तस्य कृतयागादित्वेन तत्र तत्प्रागभावाभावाद्विशेषणाभावप्रयुक्तो विशिष्टाभावः सुलभ एव, मण्यादिसत्त्वदशायामुत्तेजके सति उत्तेजकाभावविशिष्ट-मण्याद्यभावसत्ववदिति भावः ।।

ननु यागस्यैव प्रागभावविरोधितयाऽऽशुतरविनाशियागनाशे प्रागभावोन्मज्जनान्न विशेषणाभावसम्भव इति चेन्न । यागस्येव तद्ध्वंसस्यापि तत्प्रागभावविरोधित्वात् ।।

**तर्कताण्डवम् – नचास्य विशिष्टाभावस्यानन्तत्वेन फलानन्त्यं स्यादिति शङ्क्यम् । सावधिकफलबोधकश्रुतिबलाद-पूर्वस्येवोक्तस्य विशिष्टाभावस्यापि सावधिकफलजनकत्वस्वभाव कल्पनात्।।**

न्यायदीपः – प्रतिबन्धकाभाववैषम्यमाशङ्क्य निराह – **न चेति ।। सावधिकेति।।** 'अमृतो वा व सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्यः' इत्यादि-श्रुतीत्यर्थः ।

**तर्कताण्डवम् – अपि च यत्र देवदत्तादिशरीरं प्रत्यक्षेण गृहीतं प्रत्यक्षान्तरेणानुमानादिना वा पुनर्नानुभूतं तत्रापि तच्छरीरस्मृति-स्तावदुत्पद्यते । तां च स्मृतिं प्रत्यन्वयव्यतिरेकाभ्यां तदनुभवप्रागभावविशिष्टात्मविरहः स्मृतिपर्यन्तस्थायी कारणमस्तु । कृतमनुभवस्य स्मृतिहेतुत्वमङ्गीकृत्य तन्निर्वाहाय संस्कारकल्पनया।।**

न्यायदीपः – यथा फलानन्त्यशङ्का नास्ति तथा प्रतिबन्धन्तरमाह – अपि चेति ।। अनुभवप्रागभावरूपविशेषणस्याभावोपपादनायोक्तम् प्रत्यक्षान्तरेणानुमानादिना वा पुनर्नानुभूतमिति ।। कृतमिति ।। अलमित्यर्थः ।

**तर्कताण्डवम् – न चात्र स्मृतिरूपफलसातत्यशङ्काऽवकाशोप्यस्ति।। संस्कारकल्पनापक्ष इव सदृशादृष्टचिन्तासहकारिवैकल्याादेव फलाभावोपपत्तेः ।।**

न्यायदीपः – प्रागुक्तदोषोऽत्र नेत्याह – न चात्रेति ।।

**तर्कताण्डवम् – यदि च तत्र स्वर्गस्मरणादौ क्लृप्तकारणभावस्य यागा- नुभवादेरेव लाघवेन भावरूपापूर्वसंस्कारद्वारा कारणत्वं व्यवस्थाप्य तदभावात्कार्याभावोपपादनं; तर्हीहापि दाहे क्लृप्तकारणभावस्य वह्नेरेव लाघवात् भावरूपशक्त्या कारणत्वं निर्वाह्य तदभावात् कार्याभाव उपपाद्यताम् । कृतमुत्तम्भका भावविशिष्टप्रतिबन्धका-भावस्य हेतुत्वकल्पनया ।।**

**तस्मात् प्रतिबन्धकाभावो न हेतुरिति प्रतिबन्धकसमये शक्त्यभावादेव दाहाभावो वक्तव्य इति शक्तिसिद्धिः ।।**

न्यायदीपः – प्रतिबन्दीद्वये परमुखेनैव समाधिं वाचयित्वाऽत्रापि तथेत्याह – यदि चेति ।।

**तर्कताण्डवम्–ननु–शक्तिपक्षे पूर्वस्याः शक्तेर्नाशात् प्रतिबन्धकापनये वोत्तेजकसमवधाने वा कथं पुनर्दाहः? यदि च ताभ्यां**

**शक्त्यन्तरोत्पादस्तदाऽननुगतस्यापि प्रतिबन्धकाभावस्य हेतुत्वं तवापि समानमिति चेन्न ।।**

न्यायदीपः – शक्तिपक्षे बाधकमाशङ्क्यानेकदृष्टान्तपूर्वं निराह – नन्वित्यादिना।।

**तर्कताण्डवम् – सत्येव कुठारे कदाचित् कुण्ठत्ववत् सत्येव संस्कारे कदाचिदनुद्बोधवत् सत्यामेवानुमितिसामग्र्यां संशयोत्तरप्रत्यक्षस्थळे अनुमित्यभाववत् सत्येवापूर्वे कदाचिदविपाकवच्च सत्यामेव शक्तौ तस्याः कदाचित् कुण्ठीभावलक्षणावस्थाविशेषस्य कल्पनात्।।**

**उक्तं हि सुधायां – 'व्यक्तिशब्देन शक्तेरेवावस्थाविशेषस्य विवक्षितत्वात्' इति ।।**

न्यायदीपः – उक्तं हीति ।। अत्ता चराचरेत्याधिकरणसुधायाम् शक्तेरवस्थाविशेष एव न तु शक्त्यन्तरमित्येतदुक्तमित्यर्थः । शक्तिर्व्यक्त्यात्मनाऽस्तीत्युक्तौ का नाम व्यक्तिः? इति पृष्टस्योत्तरं वक्ति – व्यक्तिशब्देनेत्यादिना ।।

**तर्कताण्डवम् – किञ्चास्तु त्वया वक्ष्यमाणे पक्षचतुष्टये त्वदनभिमते विशिष्टं पदार्थान्तरमिति पक्षे च कथञ्चिद्विशिष्टाभावस्य अनुगमः कारणता च । तथाऽपि मण्यादेर्लोकसिद्धं कार्यानुकूलकिञ्चिद्धर्मविघटकत्वरूपं प्रतिबन्धकत्वं न स्यादिति मण्यादेः प्रतिबन्धकत्वान्यथाऽनुपपत्त्या शक्तिसिद्धिः ।।**

न्यायदीपः – मण्यादेः प्रतिबन्धकत्वान्यथाऽनुपपत्त्या च शक्तिसिद्धिरित्याह – **किञ्चेति ।। वक्ष्यमाण इति ।।** 'विशेषणविशेष्यतत्सम्बन्धानामभावत्रयं वा विद्यमानस्यापि प्रतिबन्धकरूपविशेष्यस्यैव प्रतियोगितावच्छेदकभेदेनाभावो वा देशान्तरस्थानामुत्तम्भकाभावविशिष्टानां मण्यादीनाम् अत्रत्याभावो वा विशेषणविशेष्ययोर्यः सम्बन्धस्तदभावो वा कारणम्' इत्युत्तरभङ्गे वक्ष्यमाण इत्यर्थः ।

**तर्कताण्डवम् –न च मणिः कार्यानुकूलविघटनरूपः प्रतिबन्ध एव, न तु प्रतिबन्धकः, तत्प्रयोक्ता पुरुष एव तु प्रतिबन्धकः, मणौ प्रतिबन्धकव्यवहारस्तु उपचाराद्वा स्वार्थे अकप्रत्ययाश्रयणाद्वेति वाच्यम् । मुख्ये बाधकाभावात् । 'मणिना प्रतिबद्धः' इति व्यवहारानुसारेण 'प्रतिबन्धकः' इत्यत्रापि कर्तर्थकप्रत्ययस्यै-वौचित्याच्च ।**

न्यायदीपः – **कर्त्रर्थकप्रत्ययस्येति** ।। 'ण्वुल्तृचौ' इति कर्तरि विहितण्वुल्प्रत्ययस्य इत्यर्थः ।।

**तर्कताण्डवम् – किञ्च मण्याद्यभावस्य कारणत्वे मणेः प्रतिबन्धक-त्वमपि न स्यात् । लोके कारणाभावरूपे दण्डाभावादौ प्रत्यवाय-कारणीभूतविहिताकरणस्याभावरूपे विहितकरणे च प्रतिबन्धक-व्यवहाराभावात् ।।**

न्यायदीपः – ननु – कारणीभूतस्वाभावप्रतियोगित्वरूपप्रतिबन्धकत्वमेव मण्यादेरिति मते शक्तिसिद्धिर्नेत्यतः शक्तिं विना तदेवायुक्तमित्याह –**किञ्चेति ।।**

तथा च कारणीभूतशक्तिविघटनरूपत्वादिनैव प्रतिबन्धकत्वं त्वयाऽपि वाच्यम् ।

**तर्कताण्डवम् – तस्माद् दृष्टान्वयव्यतिरेकाभ्यां कारणत्वानुमित्यन्यथाऽनुपपत्त्या रासभादेरकारणत्वान्यथाऽनुपपत्त्याऽपूर्वादिप्रतिबन्ध्या मण्यादेर्लोकसिद्धप्रतिबन्धकत्वान्यथाऽनुपपत्त्या त्वदभिमतप्रतिबन्धकत्वान्यथाऽनुपपत्त्या च शक्तिसिद्धिः ।।**

।। इति शक्तावर्थापत्तिपञ्चकम् ।।

न्यायदीपः – प्रागुक्तं सर्वं निष्कृष्यानुवदन्नुपसंहरति – **तस्मादिति** ।। 'अपूर्वादि' इत्यादिपदेन सङ्ग्रहः । 'केचित्' इत्यादिनोक्तकल्पनालाघवस्यारुचिग्रस्तत्वान्न तस्य सङ्ग्रहः कृतः ।।

।। इति शक्तावर्थापत्तिपञ्चकम् ।।

# ತರ್ಕತಾಂಡವ

## ದ್ವಿತೀಯ ಪರಿಚ್ಛೇದ

## ಶಕ್ತಿವಾದ

## ಲೀಲಾವತಿ ಮಾಡಿದ ಶಕ್ತ್ಯಪಲಾಪದ ನಿರಾಕರಣೆ

**ತರ್ಕತಾಂಡವ – ನನು - ಸ್ವರೂಪಸಹಕಾರ್ಯತಿರಿಕ್ತಶಕ್ತೌ ಮಾನಂ ನೇತಿ ಚೇನ್ನ। ಯಾದೃಶಾತ್ ಕರತಲಾನಲಸಂಯೋಗಾದ್ ದಾಹೋ ಜಾಯತೇ ತಾದೃಶಾದೇವ ಮಣ್ಯಾದಿಸಮವಧಾನೇ ನ ಜಾಯತ ಇತಿ ಮಣ್ಯಾದಿವಿಘಟನೀಯಶಕ್ತಿಸಿದ್ಧೇಃ । ತತ್ರ ದೃಷ್ಟಸಾಮಗ್ರ್ಯಾಃ ಸತ್ವೇನ ತದ್ವಿಲಂಬೇನ ವಾ ತತ್ಸಂಪಾದಕಾದೃಷ್ಟವಿಲಂಬೇನ ವಾ ದಾಹವಿಲಂಬಾಯೋಗಾತ್ ॥**

ಇಲ್ಲಿ ಕೆಲವರು ಹೀಗೆ ಆಕ್ಷೇಪಿಸುತ್ತಾರೆ - ಸ್ವರೂಪ ಮತ್ತು ಸಹಕಾರಿಗಳಿಗಿಂತ ಅತಿರಿಕ್ತವಾದ ಶಕ್ತಿ ಎಂಬುದೊಂದು ವಸ್ತು ಇದೆ ಎಂಬ ವಿಷಯದಲ್ಲಿ ಯಾವುದೇ ಪ್ರಮಾಣವಿಲ್ಲ ಎಂಬುದಾಗಿ. ಆದರೆ ಈ ಆಕ್ಷೇಪ ಸರಿಯಲ್ಲ. ಯಾವ ರೀತಿಯಾಗಿ ಕರತಲ ಮತ್ತು ಅಗ್ನಿಗಳ ಸಂಯೋಗದಿಂದ ದಾಹವು ಉಂಟಾಗುವುದೋ, ಅದೇ ರೀತಿಯ ಕರತಲ ಮತ್ತು ಅಗ್ನಿಯ ಸಂಯೋಗವಿದ್ದರೂ ಮಣ್ಯಾದಿಗಳು ಕೈಯಲ್ಲಿ ಇದ್ದರೆ ಆವಾಗ ದಾಹವು ಉಂಟಾಗಲಾರದು. ಹೀಗೆ ಮಣ್ಯಾದಿಗಳಿಂದ ತಡೆಯನ್ನು ಹೊಂದುವ ಶಕ್ತಿಯು ಸಿದ್ಧವಾಗುತ್ತದೆ. ಮಣ್ಯಾದಿಗಳ ಸಂಪರ್ಕವಿರುವಲ್ಲಿ ದಾಹವುಂಟಾಗಲು ಅಗತ್ಯವಿರುವ ಎಲ್ಲಾ ಸಾಮಗ್ರಿಗಳು ಇರುವವು. ಹಾಗಾಗಿ ಸಾಮಗ್ರಿಗಳ ವಿಲಂಬದಿಂದಾಗಲಿ ಅಥವಾ ಸಾಮಗ್ರಿಗಳನ್ನು ಹೊಂದಿಸುವ ಅದೃಷ್ಟದ ವಿಲಂಬದಿಂದಾಗಲಿ ದಾಹ ಆಗಿಲ್ಲ ಎಂಬ ಅಂಶವನ್ನು ಒಪ್ಪಿಕೊಳ್ಳಲಾಗದು.

**ವಿವರಣೆ** - ಒಂದು ಕಾರ್ಯ ನಡೆಯಬೇಕಾದರೆ ಅದಕ್ಕೆ ಅನೇಕ ಸಾಮಗ್ರಿಗಳ ಅಗತ್ಯವಿದೆ. ಉದಾಹರಣೆ ದಾಹವಾಗಬೇಕಾದರೆ ಕರತಲ, ಅಗ್ನಿ, ಈ ಕರತಲ ಮತ್ತು ಅಗ್ನಿಗಳ ಸಂಯೋಗ ಹೀಗೆ ಅನೇಕ ಸಾಮಗ್ರಿಗಳ ಅಗತ್ಯವಿದ್ದು, ಪ್ರಕೃತದಲ್ಲಿ ಅಂತಹ ಕಾರಣಗಳ ಪೈಕಿ ಯಾವುದೋ ಒಂದು ಕಾರಣವು ಇಲ್ಲದಿರುವುದರಿಂದ ಇಲ್ಲಿ ದಾಹವಾಗಿಲ್ಲ ಎಂದು ಹೇಳಬಹುದಲ್ಲವೆ? ಅಥವಾ ದಾಹವಾಗುವ ಸ್ಥಳದಲ್ಲಿ ಆ ಸಾಮಗ್ರಿಗಳನ್ನು ಒಂದುಗೂಡಿಸಲು ಅದೃಷ್ಟದ ಅವಶ್ಯಕತೆಯಿದೆ. ಇಲ್ಲಿ ಅಂತಹ ಅದೃಷ್ಟ ಇಲ್ಲದಿರುವುದರಿಂದ ದಾಹವಾಗಿಲ್ಲ ಎನ್ನಬಹುದಲ್ಲವೇ? ಎಂಬ ಆಕ್ಷೇಪಕ್ಕೆ 'ಯಾದೃಶಾತ್' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ - ದಾಹವಾಗಬೇಕಾದರೆ ಯಾವರೀತಿಯ ಕರತಲ ಅಗ್ನಿ ಮತ್ತು ಇವುಗಳ ಸಂಯೋಗವಿದೆಯೋ ಅದೇ ರೀತಿಯ ಕರತಲ, ಅಗ್ನಿ ಮತ್ತು ಇವುಗಳ ಸಂಯೋಗವಿದ್ದಾಗಲೂ ಮಣಿ ಇರುವುದರಿಂದ ಅಲ್ಲಿ ದಾಹವಾಗಿಲ್ಲ. ಹೀಗೆ ದಾಹವಾಗುವ ಸ್ಥಳವನ್ನು ತೋರಿಸಿ ಅದೇ ರೀತಿಯ ಸಾಮಗ್ರಿಗಳನ್ನು ಇಲ್ಲೂ ಇವೆ ಎಂಬುದನ್ನು ಸೂಚಿಸುವ ಮೂಲಕ ದೃಷ್ಟಸಾಮಗ್ರಿಗಳ ವಿಳಂಬದಿಂದಾಗಲೀ ಅಥವಾ ದೃಷ್ಟಸಾಮಗ್ರಿಗಳನ್ನು ಒಟ್ಟುಗೂಡಿಸುವ ಅದೃಷ್ಟದ ವಿಳಂಬದಿಂದಾಗಲೀ ಇಲ್ಲಿ ದಾಹವಿಳಂಬ ಆಗಿಲ್ಲ. ದೃಷ್ಟಸಾಮಗ್ರಿಗಳನ್ನು ಒಟ್ಟು ಗೂಡಿಸುವ ಅದೃಷ್ಟವು ಪ್ರತ್ಯೇಕವಾಗಿ ಯಾವುದೇ ಕಾರ್ಯವನ್ನು ತಡೆಹಿಡಿಯುವುದಿಲ್ಲ. ಅದೃಷ್ಟವು ದೃಷ್ಟಸಾಮಗ್ರಿಗಳನ್ನು ಒಟ್ಟುಗೂಡಿಸುವುದರಲ್ಲೇ ಪರ್ಯವಸಾನ ಹೊಂದುತ್ತದೆಯೇ ಹೊರತು, ಇನ್ನೊಂದು ತಡೆಯನ್ನು ಅದು ತಂದುಕೊಡಲಾರದು. ದೃಷ್ಟಸಾಮಗ್ರಿಗಳೆಲ್ಲವೂ ಕೂಡಿರುವುದರಿಂದ ಅದೃಷ್ಟದ ವಿಳಂಬವನ್ನೂ ಒಪ್ಪಲು ಸಾಧ್ಯವಿಲ್ಲ. ಹಾಗಾಗಿ ದೃಷ್ಟಸಾಮಗ್ರಿಗಳ ವಿಳಂಬದಿಂದಾಗಲೀ, ಅದೃಷ್ಟಸಾಮಗ್ರಿಗಳ ವಿಳಂಬದಿಂದಾಗಲೀ ಇಲ್ಲಿ ದಾಹವಾಗದೇ ಉಳಿದಿಲ್ಲ ಹೊರತು ದಾಹಕ್ಕೆ ಅನುಕೂಲವಾದ ಶಕ್ತಿಯು ಪ್ರತಿಬದ್ಧವಾದುದರಿಂದಲೇ ಇಲ್ಲಿ ದಾಹವಾಗಿಲ್ಲ ಎಂದು ಒಪ್ಪಿಕೊಳ್ಳಬೇಕಾಗುತ್ತದೆ.

## ವಿಷ್ಣುವಿನಲ್ಲಿ ಶಬ್ದಶಕ್ತಿ ಹೇಳುವ ನಿಮಗೆ ಶಕ್ತಿ ಹೇಗೆ ಸಿದ್ಧವಾಯಿತು?

**ನ್ಯಾಯದೀಪ** – ವಿಷ್ಣಾವೇವ ಶಕ್ತಿತಾತ್ಪರ್ಯೇ ಇತ್ಯುಕ್ತಮ್ । ಅತೀಂದ್ರಿಯಶಕ್ತಾವೇವ ಮಾನಾಭಾವಾದಿತಿ ಭಾವೇನ ಲಿಂಗಪಾದೇ 'ಅತ್ತಾ ಚರಾಚರಗ್ರಹಣಾತ್' ಇತ್ಯಧಿಕರಣಸುಧಾಯಾಂ ''ಸ್ವರೂಪಸಹಕಾರಿಸಮವಧಾನಾತಿರಿಕ್ತಶಕ್ತಿರೇವ ನಾಸ್ತಿ ಇತಿ

ಕೇಚಿತ್'' ಇತ್ಯಾದಿನಾ ''ಆಸ್ತಾಂ ಪ್ರಪಂಚಃ' ಇತ್ಯಂತೇನ ಸಂಕ್ಷೇಪೇಣ ಶಕ್ತಿಸಮರ್ಥನಂ ಕೃತಂ, ತತ್ಸ್ಪಷ್ಟಂ ವಿವೃಣ್ವಾನಃ ಶಕ್ತಿಮಾಕ್ಷಿಪ್ಯ ಸಮಾಧತ್ತೇ – ಸ್ವರೂಪೇತ್ಯಾದೀನಾ ॥

ಶಬ್ದಾದಿಸ್ವರೂಪತತ್ಸಹಕಾರಿಭ್ಯಾಮನ್ಯಶಕ್ತಾವಿತ್ಯರ್ಥಃ ॥

ಈ ಹಿಂದೆ ವೇದಗಳಿಗೆ ವಿಷ್ಣುವಿನಲ್ಲೇ ಶಕ್ತಿ ಮತ್ತು ತಾತ್ಪರ್ಯ ಎಂದು ಉಪಪಾದನೆ ಮಾಡಿದರು. ಈ ವಿಷಯದಲ್ಲಿ ನೈಯಾಯಿಕರು ಹೀಗೆ ಆಕ್ಷೇಪ ಮಾಡುತ್ತಾರೆ – 'ಅತೀಂದ್ರಿಯವಾದ ಶಕ್ತಿ ಎಂಬ ಪದಾರ್ಥದಲ್ಲಿ ಯಾವುದೇ ರೀತಿಯ ಪ್ರಮಾಣವಿಲ್ಲ'. ಈ ಅಭಿಪ್ರಾಯವನ್ನು ಲಿಂಗಪಾದದಲ್ಲಿ ಬರುವ 'ಅತ್ತಾ ಚರಾಚರಗ್ರಹಣಾತ್' ಎಂಬ ಅಧಿಕರಣದ ನ್ಯಾಯಸುಧಾದಲ್ಲಿ ಜಯತೀರ್ಥರು 'ಸ್ವರೂಪಸಹಕಾರಿಸಮವಧಾನಾತಿರಿಕ್ತ - ಶಕ್ತಿರೇವ ನಾಸ್ತಿ ಇತಿ ಕೇಚಿತ್' ಎಂಬ ವಾಕ್ಯದಿಂದ ಆರಂಭಿಸಿ 'ಆಸ್ತಾಂ ಪ್ರಪಂಚಃ' ಎಂಬ ವಾಕ್ಯದ ತನಕ ಸಂಕ್ಷೇಪವಾಗಿ ಶಕ್ತಿಯನ್ನು ಸಮರ್ಥನೆ ಮಾಡಿದ್ದಾರೆ. ನ್ಯಾಯಸುಧಾದಲ್ಲಿ ಸಂಕ್ಷೇಪವಾಗಿ ವಿವರಿಸಿದ ಈ ಪ್ರಮೇಯವನ್ನು ಸ್ಪಷ್ಟವಾಗಿ ವಿವರಿಸುವುದಕ್ಕೋಸ್ಕರ 'ನನು' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಶಕ್ತಿಯ ಬಗ್ಗೆ ಆಕ್ಷೇಪವನ್ನು ತೋರಿಸಿ, 'ಯಾದೃಶಾತ್' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಸಮಾಧಾನವನ್ನು ನೀಡುತ್ತಿದ್ದಾರೆ. ಇಲ್ಲಿ 'ಸ್ವರೂಪ' ಎಂದರೆ ಅರ್ಥವನ್ನು ತಿಳಿಸುವ ಶಬ್ದದ ಸ್ವರೂಪ ಎಂದರ್ಥ. 'ಸಹಕಾರಿ' ಎಂದರೆ ಅರ್ಥವನ್ನು ತಿಳಿಯಲು ಸಹಕಾರಿಯಾಗುವ ಶಬ್ದಶ್ರವಣ ಮತ್ತು ಈ ಶಬ್ದಕ್ಕೆ ಹೀಗೆ ಅರ್ಥ ಎಂಬ ಶಬ್ದಶಕ್ತಿಯ ಗ್ರಹಣ.[01]

## ಅಗ್ನಿಯಲ್ಲಿ ಶಕ್ತಿ ಸಿದ್ಧವಾಗಿದೆ

ನ್ಯಾಯದೀಪ – (ಕ್ವಚಿದೇವ ಶಕ್ತಿಸಿದ್ಧೌ ) ಕ್ವಚಿದತೀಂದ್ರಿಯಶಕ್ತಿಸಿದ್ಧೌ ಶಬ್ದೇ ಸಾ ಸೇತ್ಸ್ಯತೀತಿ ಭಾವೇನೋಪಪಾದನಸೌಕರ್ಯಾಯ ಪ್ರಸಿದ್ಧವಹ್ನೌ ತಾವತ್ ಸಾಧಯತಿ – ಯಾದೃಶಾದೀತಿ ॥

(01) ಆತ್ಮತ್ವಾಧಿಕರಣದ ಅನುವ್ಯಾಖ್ಯಾನದಲ್ಲಿ ಶ್ರೀಮದಾಚಾರ್ಯರು ಶಕ್ತಿ ಎಂಬ ಪದಾರ್ಥವನ್ನು ಸಮರ್ಥನೆ ಮಾಡಿದ್ದಾರೆ. ಈ ಅನುವ್ಯಾಖ್ಯಾನಕ್ಕೆ ವ್ಯಾಖ್ಯಾನ ಮಾಡುವ ಸಂದರ್ಭದಲ್ಲಿ ನ್ಯಾಯಸುಧಾಕಾರರಾದ ಶ್ರೀಮಟ್ಟೀಕಾಕೃತ್ಪಾದರೂ ಕೂಡ ವಿಶದವಾಗಿ ಶಕ್ತಿಯನ್ನು ಸಮರ್ಥನೆ ಮಾಡಿದ್ದಾರೆ. ಈ ಸಂದರ್ಭದಲ್ಲಿ ಓದುಗರು ಅವಶ್ಯವಾಗಿ ಆ ಪ್ರಕರಣವನ್ನು ಅಧ್ಯಯನ ಮಾಡಬೇಕು. ಅದಕ್ಕಾಗಿ ಸಿದ್ಧಾಂತತಾಂಡವದ ಪ್ರಾರಂಭದಲ್ಲಿ ಅನುವ್ಯಾಖ್ಯಾನ ಹಾಗೂ ನ್ಯಾಯಸುಧೆಯನ್ನು ನೀಡಲಾಗಿದೆ.

ಅನುವಾದ - 'ಕ್ವಚಿದೇವ ಶಕ್ತಿಸಿದ್ಧೌ' ಎಂಬಲ್ಲಿ 'ಕ್ವಚಿದತೀಂದ್ರಿಯಶಕ್ತಿಸಿದ್ಧೌ' ಎಂಬುದಾಗಿ ಪಾಠಾಂತರವಿದೆ. ಈ ಪಾಠಾಂತರವೇ ಹೆಚ್ಚು ಸ್ವರಸವಾಗಿದೆ. 'ಎಲ್ಲಾದರೂ ಒಂದು ಕಡೆ ಅತೀಂದ್ರಿಯವಾದ ಶಕ್ತಿಯು ಸಿದ್ಧವಾದನಂತರ ಶಬ್ದದಲ್ಲಿ ಈ ರೀತಿಯ ಅತೀಂದ್ರಿಯ ಶಕ್ತಿಯಿದೆ ಎಂಬುದನ್ನು ಉಪಪಾದನೆ ಮಾಡುವುದು ಸುಲಭ. ಆದಕ್ಕೋಸ್ಕರ ಪ್ರಸಿದ್ಧವಾದ ಅಗ್ನಿಯಲ್ಲಿ ಶಕ್ತಿ ಇದೆ ಎಂಬುದನ್ನು 'ಯಾದೃಶಾತ್' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಸಾಧಿಸುತ್ತಿದ್ದಾರೆ.

## ಅಗ್ನಿಯಲ್ಲೇಕೆ ಶಕ್ತಿ ಒಪ್ಪಬೇಕು?

ನ್ಯಾಯದೀಪ - ದಾಹಾಭಾವಸ್ಯ ಕಾರಣವೈಕಲ್ಯನಿಮಿತ್ತಕತ್ವಶಂಕಾವ್ಯುದಾಸಾಯೋಕ್ತಂ ಯಾದೃಶಾತ್ತಾದೃಶಾದೇವೇತಿ॥ ನ ಜಾಯತ ಇತಿ॥ ದಾಹ ಇತ್ಯನುಷಂಗಃ॥ ಏತೇನ ಮಣ್ಯಾದೇರ್ದಾಹಾದಿಪ್ರತಿಬಂಧಕತ್ವಂ ಪ್ರಾಪ್ತಂ, ತತಃ ಕಿಮಿತ್ಯತ ಆಹ – ಇತಿ ಮಣ್ಯಾದೀತಿ ॥ ಇತಿಶಬ್ದೋ ಹೇತ್ವರ್ಥಃ।

ಅನುವಾದ - ಕರತಲ ಮತ್ತು ಅಗ್ನಿ ಇವುಗಳ ಸಂಯೋಗವಾದಾಗ ದಾಹವಾಗುತ್ತದೆ. ಆದರೆ ಕೈಯಲ್ಲಿ ಮಣಿಯನ್ನು ಹಿಡಿದುಕೊಂಡಿದ್ದರೆ ಆಗ ದಾಹವಾಗುವುದಿಲ್ಲ. ಈ ದಾಹವಾಗದಿರುವಿಕೆಯು ಬೇರಾವುದೋ ಕಾರಣಗಳು ಇಲ್ಲದಿರುವುದರಿಂದ ಆಗಿರುತ್ತದೆ ಹೊರತು ಶಕ್ತಿಯ ಪ್ರತಿಬಂಧದಿಂದ ಅಲ್ಲ ಎಂಬ ಶಂಕೆಯನ್ನು ನಿರಾಸ ಮಾಡುವುದಕ್ಕಾಗಿ 'ಯಾದೃಶಾತ್' ಮತ್ತು 'ತಾದೃಶಾತ್' ಎಂಬ ಪದಗಳನ್ನು ಬಳಸಿದ್ದಾರೆ.

'ಮಣ್ಯಾದಿಸಮವಧಾನೇ ನ ಜಾಯತೇ' ಎಂಬಲ್ಲಿ ದಾಹ ಎಂಬ ಪದವನ್ನು ಇಟ್ಟುಕೊಳ್ಳಬೇಕು. ಅಂದರೆ 'ಮಣ್ಯಾದಿಸಮವಧಾನೇ ದಾಹಃ ನ ಜಾಯತೇ' ಎಂದು ಅಭಿಪ್ರಾಯ. ಈ ಹಿಂದೆ ಹೇಳಿದ ಕ್ರಮದಿಂದ ಮಣಿಯೇ ಮೊದಲಾದವುಗಳು ದಾಹವೇ ಮೊದಲಾದ ಕಾರ್ಯಗಳನ್ನು ಕುರಿತು ಪ್ರತಿಬಂಧಕಗಳು ಎಂದು ಸಿದ್ಧವಾಯಿತು. ಈ ರೀತಿ ಪ್ರತಿಬಂಧಕತ್ವವು ಸಿದ್ಧವಾದುದರಿಂದ ಮುಂದೇನು? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ಇತಿ ಮಣ್ಯಾದಿ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಉತ್ತರವನ್ನು ನೀಡುತ್ತಿದ್ದಾರೆ. ಇಲ್ಲಿ 'ಇತಿ' ಎಂಬ ಶಬ್ದಕ್ಕೆ ಹೇತು ಎಂಬುದಾಗಿ ಅರ್ಥ. ಈ ಕಾರಣದಿಂದ ಎಂಬ ಅಭಿಪ್ರಾಯವನ್ನು ಇಟ್ಟುಕೊಳ್ಳಬೇಕು.

## ಅನ್ಯಥಾನುಪಪತ್ತಿಪ್ರಮಾಣದಿಂದ ಶಕ್ತಿ ಸಿದ್ಧವಾಗುತ್ತದೆ

ನ್ಯಾಯದೀಪ – ಮಣ್ಯಾದೇಃ ಪ್ರತಿಬಂಧಕತ್ವಾನ್ಯಥಾನುಪಪತ್ತಿರೇವ ವಹ್ನ್ಯಾದಿಗತಾದೀಂದ್ರಿಯ ಶಕ್ತೌ ಮಾನಮ್ । ಕಾರ್ಯಾನುಕೂಲಕಿಂಚಿದ್ಧರ್ಮವಿಘಟಕತ್ವರೂಪತ್ವಾತ್ ಪ್ರತಿಬಂಧಕತ್ವಸ್ಯ ಕಾರ್ಯಾನುಕೂಲಕಿಂಚಿದ್ಧರ್ಮಶ್ಚ ಶಕ್ತೇರನ್ಯೋ ನ ಯುಕ್ತ ಇತಿ ಭಾವಃ । ಏತಚ್ಚೋಪಲಕ್ಷಣಮ್ । ವಕ್ಷ್ಯಮಾಣಾರ್ಥಪಂಚಕೇನಾಪೀತ್ಯಪಿ ಧ್ಯೇಯಮ್ ॥

ಅನುವಾದ - ದಾಹವನ್ನು ಕುರಿತು ಮಣಿಯೇ ಮೊದಲಾದವುಗಳು ಪ್ರತಿಬಂಧಕವಾಗಿವೆ. ಇದನ್ನು ಅತೀಂದ್ರಿಯವಾದ ಶಕ್ತಿಯನ್ನು ಒಪ್ಪಿಕೊಳ್ಳದೇ ಹೊಂದಿಸಲು ಆಗುವುದಿಲ್ಲ. ಹೀಗೆ ಪ್ರತಿಬಂಧಕತ್ವದ ಅನ್ಯಥಾನುಪಪತ್ತಿಯೇ 'ವಹ್ನ್ಯಾದಿಗಳಲ್ಲಿ ಅತೀಂದ್ರಿಯವಾದ ಶಕ್ತಿ ಇದೆ' ಎಂಬ ವಿಷಯದಲ್ಲಿ ಪ್ರಮಾಣವಾಗುತ್ತದೆ. ಏಕೆಂದರೆ ಯಾವುದೇ ಒಂದು ವಸ್ತು ಪ್ರತಿಬಂಧಕ ಆಗಬೇಕಾದರೆ, ಅದು ಕಾರ್ಯವನ್ನು ನಡೆಸಲು ಅನುಕೂಲವಾದ ಯಾವುದೋ ಒಂದು ಧರ್ಮದ ಕೊರತೆಯನ್ನು ಉಂಟುಮಾಡುವುದರ ಮೂಲಕ ಪ್ರತಿಬಂಧಕವಾಗಬೇಕು. ಕಾರ್ಯವನ್ನು ಕುರಿತು ಅನುಕೂಲವಾಗುವ ಯಾವುದೋ ಒಂದು ಧರ್ಮ ಎಂದರೆ ಅದು ಶಕ್ತಿಯೇ ಆಗಬೇಕು ಹೊರತು ಬೇರೆ ಇನ್ನೊಂದು ಆಗಲು ಸಾಧ್ಯವಿಲ್ಲ ಎಂಬ ಅಭಿಪ್ರಾಯವನ್ನು ಇಲ್ಲಿ ತೆಗೆದುಕೊಳ್ಳಬೇಕು. ಈ ಪ್ರತಿಬಂಧಕತ್ವದ ಅನ್ಯಥಾನುಪಪತ್ತಿಯು ಉಪಲಕ್ಷಣವಾಗಿದೆ. ಮುಂದೆ ಹೇಳುವ ಐದು ವಿಧವಾದ ಅರ್ಥಾಪತ್ತಿಯಿಂದಲೂ ಕೂಡ ಅತೀಂದ್ರಿಯವಾದ ಶಕ್ತಿಯು ಸಿದ್ಧವಾಗುತ್ತದೆ ಎಂಬ ಅಂಶವನ್ನು ಇಲ್ಲಿ ತಿಳಿದುಕೊಳ್ಳಬೇಕು.

## ಚಂದ್ರಕಾಂತಮಣಿಯನ್ನು ಪ್ರತಿಬಂಧಕವೆಂದು ಹೇಗೆ ಹೇಳುವಿರಿ?

ನ್ಯಾಯದೀಪ – ನನು ಮಣ್ಯಾದೇಃ ಪ್ರತಿಬಂಧಕತ್ವಮೇವಾಸಿದ್ಧಮ್ । ಮಣ್ಯಾದಿಸನ್ನಿಧಿಸ್ಥಲೇ ದಾಹಾಭಾವಸ್ಯ ದಾಹಸಾಮಗ್ರ್ಯಭಾವೇನ ವಾ ದಾಹಸಾಮಗ್ರೀಸಂಪಾದಕಾದೃಷ್ಟಾಭಾವೇನೋಪಪತ್ತೇರಿತ್ಯತಸ್ತಾದೃಶಾದೇವೇತ್ಯುಕ್ತಿಕೃತ್ಯಂ ವ್ಯಂಚಯನ ಪ್ರತಿಬಂಧಕತ್ವಂ ತಾವದ್ ದೃಢಯತಿ – ತತ್ರೇತಿ ॥ ಮಣ್ಯಾದಿಸನ್ನಿಧಿಸ್ಥಲ ಇತ್ಯರ್ಥಃ ॥

ಅನುವಾದ - ಇಲ್ಲಿ ಹೀಗೊಂದು ಆಕ್ಷೇಪ ಬರಬಹುದು - ಮಣಿಯೇ ಮೊದಲಾದವುಗಳಿಗೆ ಪ್ರತಿಬಂಧಕತ್ವವೇ ಸಿದ್ಧವಾಗುವುದಿಲ್ಲ. ಹೇಗೆಂದರೆ ಮಣ್ಯಾದಿಗಳು ಇರುವ ಸ್ಥಳದಲ್ಲಿ ಯಾವ ದಾಹಾಭಾವ ಇದೆಯೋ, ಅದು ದಾಹಕ್ಕೆ ಅಗತ್ಯವಿರುವ ಯಾವುದೋ ಒಂದು ಸಾಮಗ್ರಿಯ ಅಭಾವದಿಂದಾಗಲೀ ಅಥವಾ ದಾಹಕ್ಕೆ ಅಗತ್ಯವಿರುವ ಸಾಮಗ್ರಿಗಳನ್ನು ಒಗ್ಗೂಡಿಸುವ ಅದೃಷ್ಟದ ಅಭಾವದಿಂದ ಎಂದು ಹೊಂದಿಸಬಹುದು. ಹಾಗಾಗಿ ಈ ಉದ್ದೇಶದಿಂದ ಶಕ್ತಿಯನ್ನು ಒಪ್ಪಬೇಕಾಗಿಲ್ಲ. ಇದಕ್ಕೆ ಉತ್ತರವಾಗಿ ಮೂಲದಲ್ಲಿ 'ತಾದೃಶಾದೇವ' ಎಂಬ ಪದವನ್ನು ಬಳಸಿದ್ದಾರೆ. ಈ ಪದವನ್ನು ಬಳಸಿರುವುದರಿಂದ ದಾಹವಾಗುವ ಸ್ಥಳದಲ್ಲಿ ಯಾವರೀತಿಯ ಸಂಯೋಗದ ಅಗತ್ಯವಿದೆಯೋ ಅಥವಾ ಯಾವ ರೀತಿಯ ಸಾಮಗ್ರಿಗಳ ಅಗತ್ಯವಿದೆಯೋ ಆ ಎಲ್ಲಾ ಸಾಮಗ್ರಿಗಳು ಇರುವಂತಹ ಸ್ಥಳದಲ್ಲೂ ಮಣ್ಯಾದಿಗಳು ಇದ್ದಾಗ ದಾಹವಾಗುವುದು. ಹಾಗಾಗಿ ಮಣ್ಯಾದಿಗಳು ದಾಹಕ್ಕೆ ಪ್ರತಿಬಂಧಕ ಎಂದು ಸ್ಪಷ್ಟವಾಗುತ್ತದೆ.

ಈ ಅಂಶವನ್ನು 'ತತ್ರ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ದೃಢೀಕರಿಸುತ್ತಿದ್ದಾರೆ. 'ತತ್ರ' ಎಂಬ ಪದಕ್ಕೆ 'ಮಣ್ಯಾದಿಗಳು ಇರುವ ಸ್ಥಳದಲ್ಲಿ' ಎಂದು ಅರ್ಥ.

> ವಿವರಣೆ – ದಾಹವಾಗುವುದನ್ನು ಕುರಿತು ಮಣ್ಯಾದಿಗಳು ಪ್ರತಿಬಂಧಕವಾಗಿವೆ. ಈ ಮಣ್ಯಾದಿಗಳಲ್ಲಿರುವ ಪ್ರತಿಬಂಧಕತ್ವದ ಅನ್ಯಥಾನುಪಪತ್ತಿಯಿಂದ ಶಕ್ತಿಯು ಸಿದ್ಧವಾಗುತ್ತದೆ ಎಂದು ನೀವು ಹೇಳಿದ್ದೀರಿ. ಆದರೆ ಮಣ್ಯಾದಿಗಳು ಪ್ರತಿಬಂಧಕವಾಗಿದ್ದರೆ, ಆಗ ಪ್ರತಿಬಂಧಕತ್ವದ ಅನ್ಯಥಾನುಪಪತ್ತಿಯನ್ನು ನೀವು ಶಕ್ತಿಯನ್ನು ಒಪ್ಪಲು ಸಾಧಕವಾಗಿ ಬಳಸಬಹುದು. ಆದರೆ ಮಣ್ಯಾದಿಗಳು ಪ್ರತಿಬಂಧಕಗಳೇ ಅಲ್ಲ ಎಂಬ ಶಂಕೆ ಬರಬಹುದು. ಇಲ್ಲಿ 'ಮಣಿಃ ದಾಹಸ್ಯ ಪ್ರತಿಬಂಧಕಃ ತಸ್ಮಿನ್ ಸತಿ ದಾಹಾಭಾವಾತ್' ಅಥವಾ 'ದಾಹಾಭಾವವ್ಯಾಪ್ಯಽಭಾವ-ಪ್ರತಿಯೋಗಿತ್ವಾತ್' ಎಂಬ ಅನುಮಾನದಿಂದ ಪ್ರತಿಬಂಧಕತ್ವವು ಸಿದ್ಧವಾಗುತ್ತದೆ. ಮಣಿಯು ದಾಹವನ್ನು ಕುರಿತು ಪ್ರತಿಬಂಧಕವಾಗಿದೆ. ಏಕೆಂದರೆ ಮಣಿ ಇರುವಾಗ ದಾಹವಾಗಿಲ್ಲ. ಅಥವಾ ದಾಹಾಭಾವ ಆಗಬೇಕಾದರೆ ಯಾವುದರ ಅಭಾವವಿರಬಹುದೋ ಅಂತಹ ಮಣ್ಯಭಾವಕ್ಕೆ ಪ್ರತಿಯೋಗಿಯಾಗಿದ್ದ ಮಣಿಯು ಪ್ರತಿಬಂಧಕ, ಈ ಅನುಮಾನದಿಂದ ಪ್ರತಿಬಂಧಕತ್ವವು ಸಿದ್ಧವಾಗುತ್ತದೆ.

ಪುನಃ ಪೂರ್ವಪಕ್ಷಿಯು ಆಕ್ಷೇಪ ಮಾಡುತ್ತಾನೆ – ಮಣ್ಯಾದಿಗಳು ಇರುವಲ್ಲಿ ದಾಹವಾಗದೇ ಇರುವುದಕ್ಕೆ ಮಣಿಯು ಕಾರಣ ಎಂದು ನೀವು ಹೇಳುತ್ತಿದ್ದೀರಿ. ಆದರೆ ದಾಹವಾಗದೇ ಇರುವುದಕ್ಕೆ ಮಣಿಯು ಕಾರಣವಲ್ಲ. ದಾಹಕ್ಕೆ ಅಗತ್ಯವಿರುವ ಯಾವುದೋ ಒಂದು ಸಾಮಗ್ರಿಯ ಕೊರತೆಯಾಗಲೀ, ಅಥವಾ ದಾಹಕ್ಕೆ ಅಗತ್ಯವಿರುವ ಸಾಮಗ್ರಿಗಳನ್ನು ಒಟ್ಟುಗೂಡಿಸುವ ಅದೃಷ್ಟದ ಅಭಾವದಿಂದಾಗಲೀ ದಾಹವಾಗಿಲ್ಲ ಎಂದು ಹೇಳಬಹುದಲ್ಲವೇ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರವಾಗಿ, 'ತತ್ರ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳನ್ನು ಹೇಳಿದ್ದಾರೆ ಎಂಬುದನ್ನು ಸ್ಪಷ್ಟಪಡಿಸುವುದರ ಮೂಲಕ ಪ್ರತಿಬಂಧಕತ್ವವನ್ನು ದೃಢಗೊಳಿಸುತ್ತಿದ್ದಾರೆ.

ಸಾಮಗ್ರಿಯ ಅಭಾವದಿಂದಾಗಲೀ, ಅದೃಷ್ಟದ ಅಭಾವದಿಂದಾಗಲೀ ದಾಹವಾಗದೇ ಇರುವುದು ಎಂದು ನಿಶ್ಚಯವಾಗಿದ್ದರೆ ಆಗ ಕಾರಣದ ಅಭಾವದಿಂದಲೇ ಕಾರ್ಯಾಭಾವ ಸಂಭವಿಸಿದೆ ಎಂದು ಹೇಳಬಹುದು. ಆದರೆ ದಾಹವಾಗಲು ಯಾವ ಯಾವ ಕಾರಣಗಳಿವೆಯೋ ಆ ಎಲ್ಲಾ ಕಾರಣಗಳು ಇಲ್ಲಿ ಇದ್ದೇ ಇವೆ. ಎಲ್ಲಾ ಕಾರಣಗಳು ಇಲ್ಲಿ ಇರುವುದರಿಂದಲೇ ಸಾಮಗ್ರಿಗಳನ್ನು ಒಟ್ಟುಗೂಡಿಸುವ ಅದೃಷ್ಟವೂ ಇಲ್ಲಿ ಇದ್ದೇ ಇದೆ. ಹೀಗೆ ದೃಷ್ಟಕಾರಣವೂ ಇದ್ದು, ಅದೃಷ್ಟಕಾರಣವೂ ಇದ್ದು ದಾಹವಾಗಿಲ್ಲ ಎಂದಾದರೆ ಆವಾಗ ಮಣಿಯು ಪ್ರತಿಬಂಧಕ ಎಂದು ಅವಶ್ಯವಾಗಿ ಒಪ್ಪಲೇಬೇಕು.

## ಗೋಷ್ಠಿಯ ವಿಚಾರಗಳು–

ಆಕ್ಷೇಪ - ಇಲ್ಲಿ ದಾಹವಾಗದೇ ಇರುವಂತೆ ಮಣಿಯು ಅಗ್ನಿಯಲ್ಲಿರುವ ಶಕ್ತಿಯನ್ನು ತಡೆಹಿಡಿದಿದೆ ಎನ್ನುವಾಗ ಅಗ್ನಿಯಲ್ಲಿರುವ ದಾಹಕಶಕ್ತಿಯೂ ಕೂಡ ಕಾರಣಗಳ ಸಾಮಗ್ರಿಯಲ್ಲಿ ಸೇರಿದೆ. ಕಾರ್ಯವಾಗಬೇಕಾದರೆ ಯಾವುದರ ಅವಶ್ಯಕತೆ ಇದೆಯೋ, ಅದೆಲ್ಲವೂ ಸಾಮಗ್ರಿಗಳಲ್ಲಿ ಸೇರುತ್ತದೆ. ಆದ್ದರಿಂದ 'ಸಮಗ್ರಸ್ಯ ಭಾವಃ' ಎಂಬುದನ್ನೇ ನಾವು ಸಾಮಗ್ರೀ ಎಂದು ಕರೆಯುತ್ತೇವೆ. ಹಾಗಾಗಿ ದಾಹವಾಗಬೇಕಾದರೆ ಕಾರಣಸಮೂಹದಲ್ಲಿ ಶಕ್ತಿ ಇರಬೇಕಾದುದು ಕೂಡ ಅಗತ್ಯ. ಸಾಮಗ್ರಿಯಲ್ಲಿ ಸೇರಿರುವುದರಿಂದ ಪ್ರಕೃತದಲ್ಲಿ ಶಕ್ತಿ ಇಲ್ಲವಾದರೆ ಅದು ಸಾಮಗ್ರಿಯ ಅಭಾವವೇ ಹೊರತು ಬೇರೇನೂ ಅಲ್ಲ. ಹಾಗಾಗಿ ಶಕ್ತಿಯು ಪ್ರತಿಬದ್ಧವಾದಲ್ಲೂ ಸಾಮಗ್ರಿಯ ಅಭಾವದಿಂದಲೇ ಕಾರ್ಯಾಭಾವವನ್ನು ಹೇಳಬಹುದಲ್ಲವೇ?

ಸಮಾಧಾನ - ಇದಕ್ಕೆ ಎರಡು ರೀತಿಯಲ್ಲಿ ಉತ್ತರವನ್ನು ನೀಡಬಹುದಾಗಿದೆ. ಮೊದಲನೆಯ ಉತ್ತರ ಹೀಗಿದೆ – ಸಾಮಗ್ರಿಯ ಅಭಾವವನ್ನು ಕಾರ್ಯಾಭಾವಕ್ಕೆ ಪ್ರಯೋಜಕವಾಗಿ ಹೇಳಬೇಕು. ಇಲ್ಲಿ ಶಕ್ತಿಯು ಪ್ರತಿಬದ್ಧವಾಗಿದೆ ಹೊರತು ನಾಶವಾಗಿಲ್ಲ. ಶಕ್ತಿಯು ನಾಶವಾದರೆ ಮಾತ್ರ ಅದರ ಅಭಾವವನ್ನು ನಾವು ಹೇಳಬಹುದಿತ್ತು. ಶಕ್ತಿಯು ನಾಶವಾಗದೇ ಕೇವಲ ಪ್ರತಿಬದ್ಧವಾಗಿರುವುದರಿಂದ ಸಾಮಗ್ರಿಯ ಅಭಾವವನ್ನು ನಾವು ಹೇಳಬರುವುದಿಲ್ಲ.

ಎರಡನೆಯ ಉತ್ತರ ಹೀಗಿದೆ – ದಾಹವಾಗಬೇಕಾದರೆ ಎಷ್ಟು ಕಾರಣಗಳು ಬೇಕೋ ಆ ಕಾರಣಗಳು ಸಾಮಗ್ರಿಯಲ್ಲಿ ಸೇರುತ್ತವೆ. ಆದರೆ ಶಕ್ತಿಯು ಕಾರಣವಲ್ಲ. ಹಾಗಾಗಿ ಸಾಮಗ್ರಿಯಲ್ಲಿ ಶಕ್ತಿ ಸೇರುವುದಿಲ್ಲ. ಈ ಶಕ್ತಿಯು ಕಾರಣತಾರೂಪವಾಗಿದೆಯೇ ಹೊರತು ಕಾರಣವಲ್ಲ. ಯಾವುದು ನೇರವಾಗಿ ಕಾರ್ಯದಲ್ಲಿ ಭಾಗವಹಿಸುತ್ತದೋ, ಅದು ಕಾರಣವಾಗಬೇಕೇ ಹೊರತು ಕಾರಣನಿಷ್ಠವಾದ ಧರ್ಮಗಳು ಕಾರಣಗಳಾಗಲು ಸಾಧ್ಯವಿಲ್ಲ. ಹೇಗೆ ದಂಡವು ಘಟವನ್ನು ಕುರಿತು ಕಾರಣವಾಗಿದ್ದರೂ ದಂಡದ ದಾರ್ಢ್ಯವು ಕಾರಣವಲ್ಲವೋ ಹೊರತು ಅದು ಕಾರಣತಾರೂಪವಾಗಿದೆಯೋ, ಹಾಗೆಯೇ ಶಕ್ತಿಯು ಕಾರಣದಲ್ಲಿರುವ ಒಂದು ವಿಶೇಷಧರ್ಮವೇ ಹೊರತು ಅದು ನೇರವಾಗಿ ಕಾರಣವಾಗುವುದಿಲ್ಲ. ಒಂದುವೇಳೆ ಅದು ನೇರವಾಗಿ ಕಾರಣವಾಗುವುದಾದರೆ ಆವಾಗ ಪ್ರತಿಬಂಧಕ ಬಂದಾಗ ಕಾರ್ಯವಾಗದೇ ಹೋದರೆ ಆ ಶಕ್ತಿಯಲ್ಲಿ ಇನ್ನೊಂದು ಪ್ರತಿಬದ್ಧವಾಗುವ ಶಕ್ತಿಯನ್ನು ಒಪ್ಪಬೇಕಾಗುತ್ತದೆ. ಹೀಗೆ ಅನವಸ್ಥಾ ಬರುವ ಭಯವಿರುವುದರಿಂದ ಶಕ್ತಿಯನ್ನು ಕಾರಣ ಎಂದು ಒಪ್ಪಿಲ್ಲ. ಹಾಗಾಗಿ ಸಾಮಗ್ರಿಯಲ್ಲಿ ಶಕ್ತಿ ಸೇರದೇ ಇರುವುದರಿಂದ ಸಾಮಗ್ರಿಯ ಅಭಾವವು ಕಾರ್ಯಾಭಾವವನ್ನು ಕುರಿತು ಪ್ರಯೋಜಕವಲ್ಲ ಹೊರತು ಶಕ್ತಿಯು ಪ್ರತಿಬದ್ಧವಾಗಿರುವುದೇ ಪ್ರಯೋಜಕವಾಗಿದೆ.

ಹೇಗೆ ಕಾರ್ಯ ನಡೆಯಬೇಕಾದರೆ ಪ್ರತಿಬಂಧಕದ ಅಭಾವವಿರಬೇಕೋ ಹಾಗೆಯೇ ಕಾರಣದಲ್ಲಿ ಶಕ್ತಿಯು ಇರಬೇಕು. ಆದರೆ ಪ್ರತಿಬಂಧಕದ ಅಭಾವವು ಕಾರಣವಾಗಲಾರದು. ಅದೇ ರೀತಿ ಶಕ್ತಿಯು ನೇರವಾಗಿ ಕಾರಣವಾಗಲಾರದು. ಶಕ್ತಿಯನ್ನು ನೇರವಾಗಿ ಕಾರ್ಯವನ್ನು ಕುರಿತು ಕಾರಣ ಎಂದು ಒಪ್ಪಿಕೊಳ್ಳಬಹುದಾದರೆ ಪ್ರತಿಬಂಧಕಾಭಾವವನ್ನೂ ಕಾರಣವೆಂದು ನಾವು ಒಪ್ಪಿಕೊಳ್ಳಬಹುದಾಗುತ್ತದೆ. ಆದರೆ ಪ್ರತಿಬಂಧಕಾಭಾವವು

ಕಾರಣವಲ್ಲ ಎಂದು ಲೋಕದಲ್ಲಿ ವ್ಯವಹಾರವಿದ್ದು, ಅದು ಸಿದ್ಧವಾಗಿರುವುದರಿಂದ ಅದೇ ರೀತಿಯ ನ್ಯಾಯದಿಂದ ಶಕ್ತಿಯು ನೇರವಾಗಿ ಕಾರಣವಲ್ಲ ಆದರೆ ಶಕ್ತಿಯು ಇರಬೇಕು ಎಂಬ ಅಂಶವನ್ನು ಮಾತ್ರ ನಾವು ಇಲ್ಲಿ ಗಮನಿಸಬೇಕು.

ಆಕ್ಷೇಪ - ಕರತಲದಿಂದ ಅಗ್ನಿಯನ್ನು ಸ್ಪರ್ಶಿಸಿದಾಗ ಅಗ್ನಿಯು ಕರತಲವನ್ನು ಸುಡುತ್ತದೆ. ಆದರೆ ಅದೇ ಕರತಲದಿಂದ ಮಣಿಯನ್ನು ಧರಿಸಿ ಅಗ್ನಿಯನ್ನು ಸ್ಪರ್ಶಿಸಿದಾಗ ಕರತಲವು ಸುಡುವುದಿಲ್ಲ. ಹೀಗಾಗಿ ಮಣಿಯು ಕರತಲವನ್ನು ಸುಡದೇ ಇರುವುದಕ್ಕೆ ಕಾರಣ-ವಾಗಿದೆ. ಸುಡುವಿಕೆ ಎಂಬ ಕ್ರಿಯೆಗೆ ಪ್ರತಿಬಂಧಕವಾಗಿದೆ. ಈ ಪ್ರತಿಬಂಧಕವಾದ ಮಣಿಯು ಅಗ್ನಿಯಲ್ಲಿರುವ ದಾಹಕಶಕ್ತಿಯನ್ನು ತಡೆದಿದೆ ಎಂದು ಒಪ್ಪಿಕೊಳ್ಳಬೇಕು ಎಂಬ ವಿಚಾರ ಇಲ್ಲಿ ಪ್ರಸ್ತುತವಾಯಿತು. ಇಲ್ಲಿ ಕರತಲದಲ್ಲಿ ಧರಿಸಿದ ಮಣಿಯು ಅಗ್ನಿಯಲ್ಲಿರುವ ದಾಹಕಶಕ್ತಿಯನ್ನು ತಡೆದಿದೆ ಎಂದು ಹೇಳುವುದಕ್ಕಿಂತಲೂ, ಕರತಲದಲ್ಲಿ ಧರಿಸಿದ ಮಣಿಯು ಕರತಲದಲ್ಲಿ ದಾಹ್ಯತಾಯೋಗ್ಯತೆಯನ್ನು ತಡೆದಿದೆ ಎನ್ನಬಹುದಲ್ಲವೇ? ಏಕೆಂದರೆ ದಾಹಕಶಕ್ತಿ ಇರುವುದು ಅಗ್ನಿಯಲ್ಲಿ. ಪ್ರತಿಬಂಧಕವಾದ ಮಣಿ ಇರುವುದು ಕರತಲದಲ್ಲಿ. ಹೀಗೆ ಪ್ರತಿಬಧ್ಯ ಮತ್ತು ಪ್ರತಿಬಂಧಕಗಳಿಗೆ ವೈಯಧಿಕರಣ್ಯ ಇರುವುದರಿಂದ ಕರತಲದಲ್ಲಿರುವ ದಾಹ್ಯತಾ ಯೋಗ್ಯತೆಯನ್ನೇ ಮಣಿ ತಡೆದಿದೆ ಎನ್ನಬಹುದಲ್ಲವೇ?

ಸಮಾಧಾನ - ಇಲ್ಲಿ ಎರಡು ಅಂಶವನ್ನು ಗಮನಿಸಬೇಕು. ಮಣಿಯನ್ನು ಧರಿಸಿರುವುದರಿಂದ ಕರತಲವು ದಗ್ಧವಾಗಿಲ್ಲ. ಇದು ಹೇಗೋ, ಅದೇ ರೀತಿ ಅಗ್ನಿಯು ದಾಹಕವಾಗಿಲ್ಲ. ಹೀಗೆ ಕರತಲವು ದಗ್ಧವಾಗಬೇಕಾದರೆ ಕರತಲದಲ್ಲಿ ಯೋಗ್ಯತೆ ಇರಬೇಕು. ಅಗ್ನಿಯು ದಹಿಸಬೇಕಾದರೆ ಅಗ್ನಿಯಲ್ಲಿ ದಾಹಕಯೋಗ್ಯತೆ ಇರಬೇಕು. ಇಲ್ಲಿ ಕೇವಲ ಯೋಗ್ಯತೆಯೇ ಶಕ್ತಿಯಲ್ಲ ಹೊರತು ಕಾರ್ಯವಾಗುವಂತೆ ನೋಡಿಕೊಳ್ಳುವ ಪ್ರಧಾನವಾದ ಕಾರಣ ಯಾವುದಿದೆಯೋ ಅಲ್ಲೇ ಶಕ್ತಿಯನ್ನು ಒಪ್ಪಿಕೊಳ್ಳಬೇಕು.

ಇಲ್ಲಿ ಪ್ರತಿಬಂಧಕ ಒಂದುಕಡೆ ಪ್ರತಿಬದ್ಧ್ಯ ಒಂದು ಕಡೆ ಎಂಬ ವೈಯಧಿಕರಣ್ಯವಿದೆಯಲ್ಲವೇ? ಎಂದರೆ ಈ ವೈಯಧಿಕರಣ್ಯವು ದೋಷವಾಗುವುದಿಲ್ಲ. ಏಕೆಂದರೆ ಶಕ್ತಿಯೆಂದರೆ 'ಏತತ್-ಸಂಸ್ಪೃಷ್ಟಕಾರ್ಯಜನನಾನುಕೂಲಧರ್ಮ' ಎಂಬುದು. ಕರತಲವು ಅಗ್ನಿಯನ್ನು ಸ್ಪರ್ಶಿಸಿದಾಗ ದಾಹವಾಗುತ್ತದೆ. ಆ ದಾಹರೂಪವಾದ ಕಾರ್ಯವನ್ನು ಉಂಟುಮಾಡುವುದಕ್ಕೆ

ಅನುಕೂಲವಾದದ್ದು ಯಾವುದು ಅಗ್ನಿಯಲ್ಲಿದೆಯೋ ಅದೇ ಶಕ್ತಿ. ಹೀಗೆ ಒಪ್ಪಿಕೊಂಡಾಗ ಕರತಲದಲ್ಲಿರುವ ಮಣಿಯು ಅಗ್ನಿಯಲ್ಲಿರುವ ದಾಹಕಶಕ್ತಿಯನ್ನು ಪ್ರತಿಬಂಧಿಸುತ್ತದೆ ಎಂದು ಹೇಳುವುದಕ್ಕೆ ಯಾವುದೇ ತೊಂದರೆಯಿಲ್ಲ

ಆಕ್ಷೇಪ - ಒಬ್ಬನು ಕರತಲದಲ್ಲಿ ಮಣಿಯನ್ನು ಧರಿಸಿ ಅಗ್ನಿಯನ್ನು ಮುಟ್ಟಿದ್ದಾನೆ, ಇನ್ನೊಬ್ಬನು ಮಣಿಯನ್ನು ಧರಿಸದೆ ಹಾಗೆಯೇ ಕರತಲದಿಂದ ಅಗ್ನಿಯನ್ನು ಮುಟ್ಟಿದ್ದಾನೆ. ಮಣಿ ಧರಿಸಿದವನ ಕೈ ದಹನವಾಗಿಲ್ಲ. ಆದರೆ ಮಣಿಯನ್ನು ಧರಿಸದೇ ಯಾರು ಅಗ್ನಿಯನ್ನು ಮುಟ್ಟಿದ್ದಾನೋ ಅವನ ಕರತಲವು ಸುಟ್ಟಿದೆ. ಹೀಗಿರುವಾಗ ಅಗ್ನಿಯಲ್ಲಿರುವ ದಾಹಕ ಶಕ್ತಿಯನ್ನು ಮಣಿಯು ತಡೆದಿದೆ ಎಂಬುದು ಹೇಗೆ?

ಸಮಾಧಾನ - ಹಿಂದೆ ಹೇಳಿದಂತೆ ಶಕ್ತಿಯು ಒಂದೇ ಆಗಿದ್ದರೂ ಅದರ ನಿರೂಪ್ಯಗಳು ಅನೇಕವಾಗಿವೆ. ಹೇಗೆ ಭೇದವು ಒಂದೇ ಆಗಿದ್ದರೂ ಪ್ರತಿಯೋಗಿಗಳು ಅನೇಕವಾಗಿವೆಯೋ ಹಾಗೆಯೇ ಇಲ್ಲೂ ಇಟ್ಟುಕೊಳ್ಳಬೇಕು. ಅಂದರೆ ಅಗ್ನಿಯಲ್ಲಿರುವ ದಾಹಕವಾದ ಶಕ್ತಿಯು ಒಂದೇ ಆಗಿದೆ. ಆದರೆ ತನ್ನಲ್ಲಿರುವ ಎಲ್ಲ ವಸ್ತುವನ್ನೂ ಸುಡುವ ಶಕ್ತಿಯುಳ್ಳ ಅಗ್ನಿಯು ಯಾವ ಕೈಯಲ್ಲಿ ಮಣಿಯನ್ನು ಧರಿಸಿದಯೋ ಆ ಕೈಯ ವಿಷಯದಲ್ಲಿ ಅದು ಸುಮ್ಮನಾಗುತ್ತದೆ. ಆದರೆ ಮಣಿಯನ್ನು ಧರಿಸದೇ ಮುಟ್ಟಿದ ಕೈಯನ್ನು ಅದು ಸುಡುತ್ತದೆ. ಸುಡುವ ಸಾಮರ್ಥ್ಯ ಅಗ್ನಿಯಲ್ಲಿ ಇದ್ದರೂ, ಆ ಶಕ್ತಿಯು ಮಣಿಯನ್ನು ಧರಿಸಿದ ಕರತಲದ ವಿಷಯದಲ್ಲಿ ಮಾತ್ರ ಪ್ರತಿಬದ್ಧವಾಗಿದೆ ಎಂದು ಒಪ್ಪಬಹುದು.

ಇದೇ ರೀತಿ ಸುಡದಿರುವಂತೆ ತಡೆಯುವ ಸಾಮರ್ಥ್ಯವುಳ್ಳ ಔಷಧವನ್ನು ಕೈಗೆ ಲೇಪಿಸಿಕೊಂಡಾಗ ಕೈಯನ್ನು ಅಗ್ನಿಯು ಸುಡುವುದಿಲ್ಲ. ಬೇರೆ ವಸ್ತುಗಳನ್ನು ಅಗ್ನಿಯು ಸುಡುತ್ತದೆ. ಹಾಗಿದ್ದರೂ ಔಷಧವನ್ನು ಲೇಪಿಸಿದ ಕೈಯನ್ನು ಸುಡುವ ವಿಷಯದಲ್ಲಿ ಅಗ್ನಿಯು ಪ್ರತಿಬದ್ಧವಾಗಿದೆ ಎಂದು ಒಪ್ಪಿಕೊಳ್ಳಬಹುದು. ಅದೇ ರೀತಿ ಮಂತ್ರದ ವಿಷಯದಲ್ಲೂ 'ಏನಂ ಮಾ ದಹ' ಎಂಬ ಉದ್ದೇಶವಿಟ್ಟುಕೊಂಡು ಇನ್ನೊಬ್ಬನು ಮಂತ್ರವನ್ನು ಹೇಳಿದ್ದರೂ, ಆ ಮಂತ್ರವೂ ಈ ಕರತಲದಲ್ಲಿ ಇಲ್ಲದೇ ಹೋದಾಗಲೂ ಈ ಕರತಲವು ಮಂತ್ರದಿಂದ ರಕ್ಷಿತವಾಗಿರುವುದರಿಂದ ಈ ಕರತಲದ ವಿಷಯದಲ್ಲಿ ಅಗ್ನಿಯ ಶಕ್ತಿಯು ಪ್ರತಿಬದ್ಧವಾಗಿದೆ

ಎಂದು ಒಪ್ಪಿಕೊಳ್ಳಬಹುದು. ಹಾಗಾಗಿ ಈ ಪ್ರತಿಬಂಧಕವಾದ ಮಣಿಯೋ, ಮಂತ್ರವೋ, ಓಷಧವೋ ಯಾವುದನ್ನು ತಡೆದಿದೆಯೋ ಅಂತಹ ಒಂದು ವಿಶೇಷಧರ್ಮ ಅಗ್ನಿಯಲ್ಲಿ ಏನಿದೆಯೋ, ಅದೇ ಶಕ್ತಿ ಎಂದು ಸಿದ್ಧವಾಗುತ್ತದೆ.

ಆಕ್ಷೇಪ - ಮಣಿಯನ್ನು ಧರಿಸಿ ಅಗ್ನಿಯನ್ನು ಸ್ಪರ್ಶಿಸಿದಾಗ ಆ ಅಗ್ನಿಯು ಕರತಲವನ್ನು ಸುಡುವುದಿಲ್ಲ. ಮಣಿಯನ್ನು ಧರಿಸದ ಇನ್ನೊಬ್ಬ ವ್ಯಕ್ತಿ ಅದೇ ಅಗ್ನಿಯನ್ನು ಸ್ಪರ್ಶಿಸಿದಾಗ ಆ ಅಗ್ನಿಯು ಕೈಯನ್ನು ಸುಡುತ್ತದೆ. ಈಗ ಅಗ್ನಿಯಲ್ಲಿರುವ ಶಕ್ತಿಯು ಪ್ರತಿಬದ್ಧವಾಗಿದೆ ಎನ್ನುವುದರ ಬದಲು ಈ ಮಣಿಯಿಂದ ಕೈಯಲ್ಲಿರುವ ಯೋಗ್ಯತೆಯು ಪ್ರತಿಬದ್ಧ-ವಾಗಿದೆ ಎನ್ನಬಹುದಲ್ಲವೆ?

ಸಮಾಧಾನ - ಭಸ್ಮೀಭಾವವನ್ನು ಹೊಂದುವ ಯೋಗ್ಯತೆಯು ಶಕ್ತಿಯಾಗಲಾರದು. ಏಕೆಂದರೆ ಜಲದಲ್ಲಿ ದಾಹವಾಗುವ ಯೋಗ್ಯತೆಯೇ ಇಲ್ಲ. ಹಾಗೆಯೇ ಆಕಾಶದಲ್ಲೂ ದಾಹವಾಗುವ ಯೋಗ್ಯತೆಯೇ ಇಲ್ಲ. ಈ ವಸ್ತುಗಳು ಅಗ್ನಿಯನ್ನು ಸ್ಪರ್ಶಿಸಿದಾಗ ಅಗ್ನಿಯಿಂದ ದಾಹವೇ ಆಗುವುದಿಲ್ಲ. ಆದರೆ ಜಲಕ್ಕಿಂತ, ಆಕಾಶಕ್ಕಿಂತ ವ್ಯತಿರಿಕ್ತವಾದ ಯೋಗ್ಯತೆಯು ಕೈಯಲ್ಲಿದೆ. ಅಥವಾ ಬೇರೆ ಇಂಧನಾದಿಗಳಲ್ಲಿ ಇದೆ. ಹಾಗಾಗಿ ಇದು ಯೋಗ್ಯತೆಯೇ ಹೊರತು ಶಕ್ತಿಯಲ್ಲ. ಏಕೆಂದರೆ ಪ್ರಧಾನವಾದ ಕಾರಣವು ಯಾವುದಿದೆಯೋ ಆ ಪ್ರಧಾನವಾದ ಕಾರಣದಲ್ಲೇ ಕ್ರಿಯೆಯನ್ನು ಸಂಪನ್ನಗೊಳಿಸುವ ಶಕ್ತಿಯಿದೆ ಎಂದು ಒಪ್ಪಬೇಕು. ಮಣಿಯನ್ನು ಧರಿಸಿದಾಗ ಕರತಲದಲ್ಲಿರುವ ಯೋಗ್ಯತೆ ಹೋಗಿಲ್ಲ. ಆದರೆ ಮಣಿಯಿಂದ ಈ ಕರತಲದಲ್ಲಿರುವ ಯೋಗ್ಯತೆಯು ಪ್ರತಿಬದ್ಧವಾಗಿದೆ. ಅಥವಾ ಕರತಲದಲ್ಲಿರುವ ಯೋಗ್ಯತೆಯು ಅನಭಿವ್ಯಕ್ತವಾಗಿದೆ ಎನ್ನಬಹುದಲ್ಲವೇ. ಉದಾಹರಣೆಗೆ ಹಿಮಕ್ಕೆ ಮೈಯನ್ನು ನಡುಗಿಸುವ ಶಕ್ತಿಯಿದೆ. ಈ ಮೈಯನ್ನು ನಡುಗಿಸುವ ಶಕ್ತಿ ಮೈಯಲ್ಲಿ ಕಂಬಳಿ ಇತ್ಯಾದಿ ಹೊದ್ದುಕೊಂಡಾಗ ಅದು ಕಂಪನಾದಿಗಳನ್ನು ಉಂಟುಮಾಡುವುದಿಲ್ಲ.

ಆಕ್ಷೇಪ - ಹಿಮವು ಕಂಪನಾದಿಗಳನ್ನು ಉಂಟುಮಾಡುವುದಿಲ್ಲ ಎನ್ನುವುದಕ್ಕಿಂತಲೂ ಕಂಬಳಾದಿಗಳು ಮೈಯನ್ನು ರಕ್ಷಣೆ ಮಾಡಿದೆ ಎನ್ನುವುದೇ ಸರಿಯಲ್ಲವೇ?

ಅದೇ ರೀತಿ ವ್ಯಕ್ತಿಯಲ್ಲಿ ಪುಂಸ್ತ್ವ ಇದ್ದರೂ ಆ ಪುಂಸ್ತ್ವದ ಯೋಗ್ಯತೆಯು ಬಾಲ್ಯದಲ್ಲಿ ಅಭಿವ್ಯಕ್ತವಾಗಿಲ್ಲ. ಆದರೆ ಯೌವನದಲ್ಲಿ ಅದು ಅಭಿವ್ಯಕ್ತವಾಗುತ್ತದೆ. ಇಲ್ಲಿ ಯೋಗ್ಯತೆಯು

ನಾಶವಾಗಿಲ್ಲ. ಆದರೆ ಬಾಲ್ಯರೂಪವಾದ ಅವಸ್ಥೆಯಿಂದ ಅದು ಅನಭಿವ್ಯಕ್ತವಾಗಿದೆ. ಹಾಗಾಗಿ ಈ ಪ್ರತಿಬಂಧಕಗಳು ಕಾರಣದಲ್ಲಿರುವ ಶಕ್ತಿಯನ್ನು ತಡೆಯುತ್ತದೆ ಎನ್ನುವುದಕ್ಕಿಂತಲೂ ಕಾರ್ಯ ನಡೆಯಲು ಬೇಕಾದ ಯೋಗ್ಯತೆಯನ್ನು ತಡೆದಿದೆ ಎನ್ನುವುದೇ ಒಳ್ಳೆಯದಲ್ಲವೇ?

ಸಮಾಧಾನ - ಯಾವುದೇ ಕಾರ್ಯವನ್ನು ಕುರಿತು ಅದು ನಡೆಯಲು ಅಗತ್ಯವಾದುದು ಕಾರಣ ಎಂಬುದು ಶಾಸ್ತ್ರದಲ್ಲಿ ವ್ಯವಹಾರ. ಈ ಶಾಸ್ತ್ರೀಯ ವ್ಯವಹಾರಕ್ಕೆ ಅನುಸಾರವಾಗಿ ದಾಹರೂಪವಾದ ಕಾರ್ಯವು ನಡೆಯದೇ ಇರುವುದಕ್ಕೆ ಅಧಿಷ್ಠಾನದಲ್ಲಿರುವ ಯೋಗ್ಯತೆಯು ತಡೆಯಲ್ಪಡುವುದು ಕಾರಣ. ಹಾಗೆಯೇ ಕಾರಣಭೂತವಾದ ಶಕ್ತಿಯು ಪ್ರತಿಬದ್ಧವಾಗುವುದು ಕಾರಣವಾಗಿದೆ. ಯಾವುದು ಪ್ರತಿಬದ್ಧವಾದರೂ ಅಂದರೆ ಯೋಗ್ಯತೆಯಾಗಲೀ, ಕಾರಣದಲ್ಲಿರುವ ಶಕ್ತಿಯಾಗಲೀ ಈ ಎರಡರಲ್ಲಿರುವ ಯಾವುದು ಪ್ರತಿಬದ್ಧವಾದರೂ ಕಾರಣ ನಡೆಯಲಾರದು. ಅಥವಾ ಅಧಿಷ್ಠಾನದಲ್ಲಿರುವ ಯೋಗ್ಯತೆ ಪ್ರತಿಬದ್ಧವಾದರೂ, ಕಾರಣದಲ್ಲಿರುವ ಶಕ್ತಿಯು ಪ್ರತಿಬದ್ಧವಾದರೂ ಈ ಎರಡರ ಪರಿಣಾಮ ಒಂದೇ ಆಗಿದೆ. ಯಾವುದೆಂದರೆ ಇಲ್ಲಿ ಕಾರ್ಯವು ನಡೆದಿಲ್ಲ. ಹೀಗೆ ಎರಡರಲ್ಲಿ ಯಾವುದನ್ನು ಒಪ್ಪಿಕೊಳ್ಳಲು ಅವಕಾಶವಿದ್ದಾಗ ಕಾರಣದಲ್ಲಿರುವ ಶಕ್ತಿಯನ್ನೇ ಈ ಪ್ರತಿಬಂಧಕವು ತಡೆದಿದೆ ಎನ್ನುವುದೇ ಶಾಸ್ತ್ರೀಯ ವ್ಯವಹಾರಕ್ಕೆ ಅನುಸಾರಿಯಾದ ಕ್ರಮವಾಗುತ್ತದೆ. ಇನ್ನು ಪ್ರತಿಬಧ್ಯವಾದ ವಸ್ತು ಮತ್ತು ಪ್ರತಿಬಂಧಕ, ಈ ಎರಡಕ್ಕೂ ಸಾಮಾನ್ಯಾಧಿಕರಣ್ಯವೇ ಬೇಕೆಂಬ ಹಠವಿದ್ದರೆ, ಆಗ ಅಗ್ನಿಯು ಕರತಲವನ್ನು ಸುಡಬೇಕಾದರೆ ಅಲ್ಲಿ ಅನೇಕ ಕಾರಣಗಳು ಇವೆ. ಅಗ್ನಿಯಲ್ಲಿ ದಾಹಕ ಯೋಗ್ಯತೆ ಇರಬೇಕು. ಕರತಲದಲ್ಲಿ ದಾಹವಾಗುವ ಯೋಗ್ಯತೆ ಇರಬೇಕು. ಇವೆರಡರಲ್ಲಿ ಅತಿಶಯವಾದ ಸಂಯೋಗ ಇರಬೇಕು. ಇಲ್ಲಿ ಈ ಮೂರೂ ಕೂಡ ದಹನರೂಪವಾದ ಕಾರ್ಯವನ್ನು ಕುರಿತು ಕಾರಣಗಳಾಗಿದೆ. ಹಾಗಾಗಿ ಕಾರಣತ್ವೇನ ಇರುವ ಅನೇಕ ವಸ್ತುಗಳಲ್ಲಿ ಒಂದಾದ ದಾಹ್ಯತಾ ಯೋಗ್ಯತೆಯಲ್ಲೂ ಶಕ್ತಿಯನ್ನು ಒಪ್ಪಿಕೊಳ್ಳಬಹುದು. ಇದಕ್ಕಾಗಿಯೇ 'ತದ್ವಿಘಟನೀಯ ಶಕ್ತಿಸಿದ್ಧಿಃ' ಎಂಬುದಾಗಿ ಪ್ರತಿಬಂಧಕದಿಂದ ತಡೆಯಲ್ಪಡುವ ಶಕ್ತಿಯು ಸಿದ್ಧವಾಗುತ್ತದೆ ಎಂದು ಸಾಮಾನ್ಯವಾಗಿ ಹೇಳಿದ್ದಾರೆ. ಎಲ್ಲಿರುವ ಶಕ್ತಿಯು ಪ್ರತಿಬದ್ಧವಾಗಿದೆ ಎಂದು ಅಲ್ಲಿ ಹೇಳಿಲ್ಲ. ಹಾಗಾಗಿ ಯಾವುದರಲ್ಲಿ ನೀವು ಪ್ರತಿಬಂಧಕವನ್ನು ಹೇಳಿದರೂ ಅಲ್ಲಿರುವ ಯೋಗ್ಯತೆಯಾಗಲೀ, ಶಕ್ತಿಯಾಗಲೀ ಪ್ರತಿಬದ್ಧವಾಗಿದೆ ಎಂದು ಹೇಳುವುದಕ್ಕೆ ಅಡ್ಡಿಯಿಲ್ಲ.

ಆದರೂ ಕಾರ್ಯಾಭಾವವನ್ನು ಕುರಿತು ಪ್ರಧಾನಕಾರಣದಲ್ಲಿರುವ ನ್ಯೂನತೆಯೇ ಕಾರಣ ಎಂಬ ಶಾಸ್ತ್ರೀಯ ಅಂಶವನ್ನು ಇಟ್ಟುಕೊಂಡು ಇಲ್ಲಿ ಪ್ರಧಾನ ಕಾರಣದಲ್ಲೇ ಶಕ್ತಿಯನ್ನು ಒಪ್ಪಿಕೊಳ್ಳಲಾಗಿದೆ.

## ಶಕ್ತಿಯ ಬದಲು ಅದೃಷ್ಟ ಒಪ್ಪೋಣ

ತರ್ಕತಾಂಡವ–ನಚದೃಷ್ಟಸಾಮಗ್ರ್ಯಾಃಸತ್ವೇಪಿಮಣಿರೇವಸಾಕ್ಷಾದ್ದಾಹಜನಕಮದೃಷ್ಟಂ ನಾಶಯತೀತಿ ವಾಚ್ಯಮ್ ।

ಅನುವಾದ– ಇಲ್ಲಿ ಪೂರ್ವಪಕ್ಷಿಗಳು ಹೀಗೆ ಆಕ್ಷೇಪ ಮಾಡಬಹುದು - ದೃಷ್ಟಸಾಮಗ್ರಿಯು ಇದ್ದರೂ ಕೂಡ ಮಣಿಯು ಸಾಕ್ಷಾತ್ ದಾಹಜನಕವಾದ ಅದೃಷ್ಟವನ್ನು ನಾಶಮಾಡುತ್ತದೆ. ಹಾಗಾಗಿ ಶಕ್ತಿಯನ್ನು ಒಪ್ಪಬೇಕಾಗಿಲ್ಲ ಎಂದು. ಆದರೆ ಹೀಗೆ ಹೇಳುವಂತಿಲ್ಲ.

## ಮಣಿ ಪ್ರತಿಬಂಧಕವಾಗಲಿ; ಶಕ್ತಿ ಏಕೆ ?

ನ್ಯಾಯದೀಪ – ನನ್ವಸ್ತೇವಂ ಮಣ್ಯಾದೇಃ ಪ್ರತಿಬಂಧಕತ್ವಂತಥಾಪಿಸಾಕ್ಷಾದ್ದಾಹ-ಜನಕಾದೃಷ್ಟನಾಶಕತ್ವೇನ ವಾ ದಾಹಪ್ರತಿಕೂಲದುರದೃಷ್ಟಜನಕತ್ವೇನ ವಾ ಸ್ವಾಭಾವ-ರೂಪದಾಹಕಾರಣವಿಘಟಕತ್ವೇನ ವಾ, ಮಣ್ಯಾದೇಃ ಪ್ರತಿಬಂಧಕತ್ವೋಪಪತ್ತೌ ನ ತದನ್ಯಥಾನುಪಪತ್ತ್ಯಾऽತೀಂದ್ರಿಯಶಕ್ತಿಸಿದ್ಧಿರಿತ್ಯತಃ ಆದ್ಯಂ ತಾವದಶಂಕ್ಯ ನಿರಾಹ – ನ ಚ ದೃಷ್ಟೇತಿ ॥

ಅನುವಾದ - ಇಲ್ಲಿ ಪೂರ್ವಪಕ್ಷಿಗಳು ಹೀಗೆ ಆಕ್ಷೇಪ ಮಾಡುತ್ತಾರೆ - ನೀವು ಹೇಳುವಂತೆ ಮಣ್ಯಾದಿಗಳಿಗೆ ಪ್ರತಿಬಂಧಕತ್ವವನ್ನು ಒಪ್ಪಿಕೊಳ್ಳೋಣ. ಹಾಗಿದ್ದರೂ ಶಕ್ತಿಯು ಸಿದ್ಧಿಯಾಗಲಾರದು. ಹೇಗೆಂದರೆ ಈ ಮಣಿಯು ಸಾಕ್ಷಾತ್ತಾಗಿ ದಾಹವನ್ನು ಉಂಟುಮಾಡುವ ಅದೃಷ್ಟವನ್ನು ನಾಶಗೊಳಿಸಿ ದಾಹವಾಗದಂತೆ ತಡೆದಿದೆ. ಅಥವಾ ಎರಡನೆಯ ಪಕ್ಷದಂತೆ ದಾಹಕ್ಕೆ ಪ್ರತಿಕೂಲವಾದ ಒಂದು ದುರದೃಷ್ಟವನ್ನು ಉಂಟುಮಾಡಿದೆ, ಹಾಗಾಗಿ ದಾಹವಾಗಿಲ್ಲ. ಅಥವಾ ಮೂರನೆಯ ಪಕ್ಷದಲ್ಲಿ ದಾಹವನ್ನು ಕುರಿತು ಮಣಿಯ ಅಭಾವವೂ ಕಾರಣವಾಗಿದ್ದು, ತನ್ನ ಅಭಾವರೂಪವಾದ

ದಾಹಕಾರಣವು ಅಲ್ಲಿ ಇಲ್ಲದಿರುವುದರಿಂದ ಮಣ್ಯಾದಿಗಳು ಪ್ರತಿಬಂಧಕವಾಗಿವೆ ಎಂದು ಹೇಳಬರುವುದರಿಂದ ಪ್ರತಿಬಂಧಕತ್ವದ ಅನ್ಯಥಾನುಪಪತ್ತಿಯಿಂದ ಅತೀಂದ್ರಿಯಶಕ್ತಿಯು ಸಿದ್ಧವಾಗಲಾರದು ಎಂಬುದಾಗಿ. ಹೀಗೆ ಮೂರುಪಕ್ಷಗಳಲ್ಲಿ ಮೊದಲನೆಯ ಪಕ್ಷವನ್ನು, 'ನ ಚ ದೃಷ್ಟ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಶಂಕೆಮಾಡಿಕೊಂಡು 'ತಾದೃಶ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ನಿರಾಕರಣೆ ಮಾಡುತ್ತಿದ್ದಾರೆ.

## ಅದೃಷ್ಟದಲ್ಲಿ ಪ್ರಮಾಣವಿಲ್ಲವೆಂದು ಸಮಾಧಾನ

ತರ್ಕತಾಂಡವ – ತಾದೃಶಾದೃಷ್ಟೇ ಮಾನಾಭಾವಾತ್ ।
ಅನ್ಯಥಾಂತ್ಯತಂತುಸಂಯೋಗಾದೌ ಸತ್ಯಪಿ ಕದಾಚಿತ್ಪಟಾನುತ್ಪತ್ತಿಃ ಸ್ಯಾತ್ ।

ಅನುವಾದ– ಸಾಕ್ಷಾದ್ದಾಹಜನಕವಾದ ಅದೃಷ್ಟದಲ್ಲಿ ಯಾವುದೇ ಪ್ರಮಾಣವು ಇರುವುದಿಲ್ಲ. ಒಂದುವೇಳೆ ಪ್ರಮಾಣವಿಲ್ಲದೆ ನೀವು ಸಾಕ್ಷಾದ್ದಾಹಜನಕವಾದ ಅದೃಷ್ಟವನ್ನು ಒಪ್ಪುವುದಾದರೆ ಪಟಕ್ಕೆ ಕಾರಣವಾದ ಅಂತ್ಯತಂತುಸಂಯೋಗವಿದ್ದಾಗಲೂ ಅದೃಷ್ಟವು ಎಲ್ಲಾ ಕಡೆಯಲ್ಲಿ ಇರಬೇಕೆಂದು ನಿಯಮವಿಲ್ಲದಿರುವುದರಿಂದ ಕೆಲವೊಮ್ಮೆ ಪಟವು ಉತ್ಪತ್ತಿಯಾಗದೇ ಹೋಗಬೇಕಾದೀತು. ಆದರೆ ಅಂತ್ಯತಂತುಸಂಯೋಗವಾದನಂತರ ಪಟೋತ್ಪತ್ತಿಯು ಎಲ್ಲಾ ಕಡೆ ಖಚಿತವಾಗಿರುವುದರಿಂದ ಅಂತಹ ಕಾರ್ಯವನ್ನು ಕುರಿತು ಸಾಕ್ಷಾತ್‌ಜನಕವಾದ ಅದೃಷ್ಟವನ್ನು ಒಪ್ಪಬಾರದು.

## ದಾಹಕ್ಕೆ ಮಣ್ಯಾಭಾವವನ್ನೂ ಕಾರಣವೆನ್ನಬಹುದೇ ?

ನ್ಯಾಯದೀಪ – ತಾದೃಶೇತಿ ॥ ಸಾಕ್ಷಾಜ್ಜನಕಪ್ರತಿಬಂಧಕನಾಶ್ಯಾದೃಷ್ಟ ಇತ್ಯರ್ಥಃ । ಪಟಾನುತ್ಪತ್ತಿಗಿತಿ॥ ತತ್ರಾಪಿ ಕದಾಚಿತ್ ತ್ವದುಕ್ತಾದೃಷ್ಟಾಭಾವಸಂಭವಾದಿತಿ ಭಾವಃ । ಏತಚ್ಚೋಪಕಲ್ಪಣಮ್ । ಮಣಿಕೃದುಕ್ತದಿ ಶಾಮಣ್ಯಪಸರಣಾನಂತರಂ ದಾಹಾಭಾವ ಪ್ರಸಂಗಾದನ್ವಯವ್ಯತಿರೇಕಾಭ್ಯಾಂ ಕ್ಲೃಪ್ತತ್ವೇನ ಮಣ್ಯಾದ್ಯಭಾವರೂಪಪದಾಹಕಾರಣಾ

ಭಾವೇನೈವ ದಾಹಾಭಾವೋಪಪತ್ತೇಶ್ಚೇತ್ಯಪಿ ಧ್ಯೇಯಮ್ ॥

ಅನುವಾದ - ಇಲ್ಲಿ 'ತಾದೃಶ' ಎಂಬ ಪದಕ್ಕೆ ಸಾಕ್ಷಾಜ್ಜನಕವಾದ ಪ್ರತಿಬಂಧಕದಿಂದ ನಾಶವಾಗುವ ಅದೃಷ್ಟದಲ್ಲಿ ಎಂದು ಅರ್ಥ. ಅಂದರೆ ಸಾಕ್ಷಾಜ್ಜನಕವಾಗಿದ್ದು, ಪ್ರತಿಬಂಧಕದಿಂದ ನಾಶವಾಗುವ ಅದೃಷ್ಟದಲ್ಲಿ ಯಾವುದೇ ರೀತಿಯಾದ ಪ್ರಮಾಣವಿಲ್ಲ ಎಂಬ ಅರ್ಥವನ್ನು ಮೂಲದಲ್ಲಿ ತೆಗೆದುಕೊಳ್ಳಬೇಕು.

ಈ ವಾಕ್ಯದಿಂದ ಹೇಳಿದ ವಿಷಯವನ್ನು ಇಲ್ಲಿ ಉಪಪಾದನೆ ಮಾಡುತ್ತಿದ್ದಾರೆ. ಪಟಾದಿಗಳ ವಿಷಯದಲ್ಲೂ ಕೂಡ ಕೆಲವೊಮ್ಮೆ ನೀವು ಹೇಳಿದಂತೆ ಸಾಕ್ಷಾಜ್ಜನಕವಾದ ಅದೃಷ್ಟದ ಅಭಾವವು ಉಂಟಾಗಬಹುದು. ಆದ್ದರಿಂದ ಎಲ್ಲಾದರೂ ಒಂದುಕಡೆ ಅಂತ್ಯತಂತುಸಂಯೋಗವಿದ್ದರೂ ಪಟವು ಉತ್ಪತ್ತಿಯಾಗಿಲ್ಲ ಎಂಬ ಅಂಶವು ಬರಬೇಕಾದೀತು. ಇಲ್ಲಿ ಹೇಳಿದ ಪಟಾದ್ಯನುತ್ಪತ್ತಿರೂಪವಾದ ಅನಿಷ್ಟಾಪತ್ತಿಯು ಉಪಲಕ್ಷಣವಾಗಿದೆ. ಇದೇ ರೀತಿಯಾಗಿ ಮಣಿಕಾರರು ಹೇಳಿದಂತೆ ಸಾಕ್ಷಾತ್ ದಾಹಜನಕವಾದ ಅದೃಷ್ಟವನ್ನು ಮಣಿಯು ನಾಶಮಾಡುವುದೇ ಆಗಿದ್ದರೆ, ಮಣಿಯನ್ನು ತೆಗೆದನಂತರ ದಾಹವಾಗದೇ ಹೋಗಬೇಕಾದೀತು. ಏಕೆಂದರೆ ಸಾಕ್ಷಾತ್ತಾಗಿ ದಾಹಜನಕವಾದ ಅದೃಷ್ಟವು ಮಣಿಯಿಂದ ಈಗಾಗಲೇ ನಾಶವಾಗಿದೆ. ಆದ್ದರಿಂದ ದಾಹವಾಗದೇ ಹೋಗಬೇಕಾದೀತು ಎಂಬ ಪ್ರಸಂಗವು ಇಲ್ಲಿ ಅನರ್ಥಾಪಾದಕವಾಗಿದೆ. ಅಷ್ಟೇ ಅಲ್ಲದೇ, ಅಪ್ರಾಮಾಣಿಕವಾದ ಸಾಕ್ಷಾದ್ದಾಹಜನಕವಾದ ಅದೃಷ್ಟವನ್ನು ಒಪ್ಪಿಕೊಳ್ಳುವುದರ ಬದಲು ಅನ್ವಯವ್ಯತಿರೇಕಗಳಿಂದ ಮಣಿಯ ಅಭಾವವು ದಾಹವನ್ನು ಕುರಿತು ಕಾರಣ ಎಂಬುದು ಸಿದ್ಧವಾಗಿರುವುದರಿಂದ ಮಣ್ಯಭಾವವನ್ನು ದಾಹಕಾರಣದಲ್ಲೇ ಸೇರಿಸುವುದರ ಮೂಲಕ ಕಾರಣವಿಲ್ಲದೆಯೇ ಕಾರ್ಯವಾಗಿಲ್ಲ ಹೊರತು ಶಕ್ತಿಯು ಪ್ರತಿಬದ್ಧವಾದುದರಿಂದ ಅಲ್ಲ ಎಂಬುದರಿಂದಲೇ ಶಕ್ತಿಯನ್ನು ಒಪ್ಪದಂತೆ ನೋಡಿಕೊಳ್ಳಬಹುದಾಗಿದೆ.

> ವಿವರಣೆ - ಅಪ್ರಾಮಾಣಿಕವಾಗಿ ಸಾಕ್ಷಾದ್ದಾಹಜನಕವಾದ ಅದೃಷ್ಟವನ್ನು ಒಪ್ಪಿಕೊಳ್ಳುವುದರ ಬದಲು ಮಣಿ ಮತ್ತು ಮಣಿಯ ಅಭಾವಗಳಿಂದಲೇ ದಾಹಾಭಾವವನ್ನು ಹೊಂದಿಸಲು ಬರುತ್ತದೆ. ಅದು ಹೇಗೆಂದರೆ, ಎಲ್ಲಿ ಮಣ್ಯಭಾವವಿದೆಯೋ ಅಲ್ಲಿ ದಾಹವಿದೆ. ಎಲ್ಲಿ ಮಣ್ಯಭಾವವಿಲ್ಲವೋ ಅಂದರೆ ಮಣಿ ಇದೆಯೋ ಅಲ್ಲಿ ದಾಹವಿಲ್ಲ. ಹೀಗೆ ಅನ್ವಯ ವ್ಯತಿರೇಕವ್ಯಾಪ್ತಿ ಇರುವುದರಿಂದ ಮಣ್ಯಭಾವವು ದಾಹವನ್ನು ಕುರಿತು ಕಾರಣವಾಗುತ್ತದೆ. ಒಂದುವೇಳೆ ಮಣಿಯಿದ್ದರೆ ಆವಾಗ ಮಣ್ಯಾಭಾವರೂಪವಾದ ಕಾರಣವೇ

ಇಲ್ಲದಿರುವುದರಿಂದ ಇದರಿಂದಲೇ ದಾಹವಾಗಿಲ್ಲ ಹೊರತು ಅದೃಷ್ಟವಾದ ಇನ್ನೊಂದು ಕಾರಣದಿಂದ ಅಲ್ಲ ಎಂಬ ವಿಷಯವನ್ನು ಮಣಿಕಾರರು ಈ ಮೊದಲನೆಯ ಪಕ್ಷಕ್ಕೆ ದೋಷರೂಪವಾಗಿ ಹೇಳಿದ್ದಾರೆ. ಇದು ವ್ಯಾಸರಾಯರಿಗೆ ಅಭಿಪ್ರೇತವಾದ ಪಕ್ಷ ಅಲ್ಲ. ಇದು ಹಿಂದೆ ಹೇಳಿದ ಮೂರು ರೀತಿಯ ವಿಕಲ್ಪಗಳಲ್ಲಿ ಮೂರನೇ ವಿಕಲ್ಪದಲ್ಲಿ ಬರುತ್ತದೆ. 'ಸ್ವಾಭಾವರೂಪದಾಹಕಾರಣವಿಘಟಕತ್ವೇನ' ಎಂಬ ಮೂರನೇ ಪಕ್ಷ ಇದಾಗಿದ್ದು, ಅಲ್ಲಿ 'ಸ್ವ' ಎಂದರೆ ಪ್ರತಿಬಂಧಕ. ಆ ಪ್ರತಿಬಂಧಕದ ಅಭಾವವೇ ಕಾರಣರೂಪವಾಗಿದೆ. ಹೀಗೆ ಪ್ರತಿಬಂಧಕಾಭಾವರೂಪವಾದ ದಾಹಕಾರಣವೇ ಅಲ್ಲಿ ಇಲ್ಲ ಎಂಬುದರಿಂದಲೇ ದಾಹಾಭಾವವನ್ನು ಕೂಡಿಸಲು ಬರುವಾಗ ಪ್ರತಿಬಂಧಕದಿಂದ ಶಕ್ತಿವಿಘಟನೆಯನ್ನು ಒಪ್ಪಬೇಕಾಗಿಲ್ಲ ಎನ್ನುವುದು ಮಣಿಕಾರನ ಮತ.

## ಮಣಿಯಂತೆ ದುರಿತವೂ ಪ್ರತಿಬಂಧಕ

**ತರ್ಕತಾಂಡವ – ವಂಧ್ಯಾಪುಂಸಂಪ್ರಯೋಗಾದಾವಪಿ ಸಾಕ್ಷಾಜ್ಜನಕಾದೃಷ್ಟ ವಿಲಂಬಾನ್ನ ವಿಲಂಬಃ । ಕಿಂ ತು ನಾಪುತ್ರಸ್ಯ ಲೋಕೋಸ್ತೀತಿ ಶ್ರುತ್ಯಾಽಪುತ್ರಸ್ಯ ನರಕೋಕ್ತ್ಯಾ ತಜ್ಜನಕಸ್ಯ ದುರಿತಸ್ಯಾವಶ್ಯಕತ್ವೇನ ದಾಹಂ ಪ್ರತಿ ಮಣೇರಿವ ದುರಿತಸ್ಯೈವ ಪುತ್ರೋತ್ಪತ್ತಿಪ್ರತಿಬಂಧಕತ್ವಾತ್ ॥**

ಅನುವಾದ - ಇದೇ ರೀತಿ ವಂಧ್ಯಾಸ್ತ್ರೀಗೂ ಪುರುಷನಿಗೂ ಸಂಪ್ರಯೋಗವು ಏರ್ಪಟ್ಟಾಗ ಅಲ್ಲಿ ಪುತ್ರೋತ್ಪತ್ತಿ ಉಂಟಾಗುವುದಿಲ್ಲ. ಅಂತಹ ಕಡೆಯಲ್ಲಿಯೂ ಕೂಡ ದೃಷ್ಟವಾದ ಎಲ್ಲಾ ಕಾರಣಗಳು ಸೇರಿದ್ದರೂ ಅಂತಹ ದೃಷ್ಟಕಾರಣವನ್ನು ಸೇರಿಸುವ ಅದೃಷ್ಟವು ಅಲ್ಲಿ ಇದ್ದಾಗಲೂ ಸಾಕ್ಷಾತ್ ಜನಕವಾದ ಅದೃಷ್ಟವಿಲಂಬವನ್ನು ಅಲ್ಲಿ ಒಪ್ಪಲಾಗದು.

'ನಾಪುತ್ರಸ್ಯ ಲೋಕೋಽಸ್ತಿ' ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿ ಅಪುತ್ರನಾದ ವ್ಯಕ್ತಿಗೆ ಅಂದರೆ ಮಕ್ಕಳಿಲ್ಲದ ವ್ಯಕ್ತಿಗೆ ಯಾವುದೇ ಸ್ವರ್ಗಾದಿ ಉತ್ತಮಲೋಕಗಳು ಸಿಗಲಾರವು ಎಂದು ಹೇಳಿದ್ದರಿಂದ ಅಪುತ್ರನಾದ ವ್ಯಕ್ತಿಗೆ ನರಕಾದಿ ಅನಿಷ್ಟಗಳು ಉಂಟಾಗುತ್ತವೆ ಎಂದು ತಿಳಿಯುತ್ತದೆ. ಈ ನರಕಾದಿ ಅನಿಷ್ಟಲೋಕಗಳನ್ನು ಉಂಟುಮಾಡಲು ಅಗತ್ಯವಾದ

ಪ್ರತಿಬಂಧಕಾದೃಷ್ಟ ಅಥವಾ ದುರಿತ ಇವು ಆವಶ್ಯಕವಾಗಿರುವುದರಿಂದ ದಾಹವನ್ನು ಕುರಿತು ಹೇಗೆ ಮಣಿಯು ಪ್ರತಿಬಂಧಕವಾಗಿದೆಯೋ ಹಾಗೆಯೇ ಪುತ್ರೋತ್ಪತ್ತಿಯನ್ನು ಕುರಿತು ಇಲ್ಲಿ ದುರಿತವು ಪ್ರತಿಬಂಧಕವಾಗಿದೆ ಎಂದು ಒಪ್ಪಿಕೊಳ್ಳಬೇಕು.

ವಿಶೇಷವಿಚಾರ–ಅದೃಷ್ಟಗಳು ಎರಡುಬಗೆಯಾಗಿವೆ. ಮೊದಲನೆಯದು ಜನಕಾದೃಷ್ಟ ಅಥವಾ ಕಾರಣಾದೃಷ್ಟ. ಇದನ್ನು ಕೆಲವುಕಡೆ ಪುಣ್ಯ ಎಂಬುದಾಗಿಯೂ ವ್ಯವಹಾರ ಮಾಡಬಹುದು. ಎರಡನೆಯದು ಪ್ರತಿಬಂಧಕಾದೃಷ್ಟ, ಇದನ್ನು ಕೆಲವುಕಡೆ ಪಾಪ ಎಂಬುದಾಗಿಯೂ ವ್ಯವಹಾರ ಮಾಡಬಹುದು. ಈ ಕಾರಣಾದೃಷ್ಟವು ದೃಷ್ಟಸಾಮಗ್ರಿಗಳನ್ನು ಒಟ್ಟುಗೂಡಿಸುವುದರಲ್ಲೇ ಪರ್ಯವಸಾನವನ್ನು ಹೊಂದುತ್ತದೆ. 'ವಂಧ್ಯಾಪುಂಸಂಪ್ರಯೋಗ' ಅಂದರೆ ಬಂಜೆಸ್ತ್ರೀಯು ಪುರುಷನ ಸಂಪರ್ಕವನ್ನು ಪಡೆದಾಗ ಅಲ್ಲಿ ಮಕ್ಕಳಾಗದೆ ಇರುವುದಕ್ಕೆ ದೃಷ್ಟಸಾಮಗ್ರಿಯಲ್ಲಿ ಕೊರತೆಯಿರುವುದು ಕಾರಣವಾಗಿಲ್ಲ.

ಏಕೆಂದರೆ ಆ ಸ್ತ್ರೀಯಲ್ಲಿ ಪುತ್ರೋತ್ಪತ್ತಿಗೆ ಬೇಕಾದ ಶರೀರದಲ್ಲಿ ಅಗತ್ಯವಿರುವ ಎಲ್ಲಾ ಕಾರಣಗಳು ಇದ್ದೇ ಇವೆ. ಆದರೆ ಪುತ್ರೋತ್ಪತ್ತಿಯಾಗಿಲ್ಲ. ಈ ಸಂದರ್ಭದಲ್ಲಿ ಕಾರಣೀಭೂತವಾದ ಅಥವಾ ಜನಕಾದೃಷ್ಟದಲ್ಲಿ ವೈಕಲ್ಯವನ್ನು ಹೇಳಲು ಬರುವುದಿಲ್ಲ. ಜನಕಾದೃಷ್ಟವು ಸಾಮಗ್ರಿಗಳನ್ನು ಒಟ್ಟುಗೂಡಿಸುವುದರಲ್ಲೇ ಪರ್ಯವಸಾನವಾಗುತ್ತದೆ. ಪ್ರಕೃತದಲ್ಲಿ ದೃಷ್ಟವಾದ ಎಲ್ಲಾ ಸಾಮಗ್ರಿಗಳು ಇದ್ದೇ ಇವೆ. ಹಾಗಾಗಿ ಈ ಸಂದರ್ಭದಲ್ಲಿ ಪುತ್ರೋತ್ಪತ್ತಿಯನ್ನು ಕುರಿತು ಪ್ರತಿಬಂಧಕಾದೃಷ್ಟವಿದೆ ಅಥವಾ ಪಾಪ ಇದೆ ಎಂಬುದಾಗಿ ವ್ಯವಹಾರವಿದೆ.

ಅದೃಷ್ಟಗಳು ಎರಡಿವೆ ಎಂದು ಒಪ್ಪಿದಮೇಲೆ ಕಾರಣಾದೃಷ್ಟದ ಜೊತೆಗೆ ಸಾಕ್ಷಾಜ್ಜನಕಾದೃಷ್ಟವನ್ನು ಒಪ್ಪಿಕೊಳ್ಳಬಹುದಲ್ಲವೇ ? ಎಂಬ ಪ್ರಶ್ನೆ ಬಂದರೂ ದೃಷ್ಟವಾದ ಎಲ್ಲ ಸಾಮಗ್ರಿಗಳು ಇದ್ದು, ಕಾರ್ಯ ನಡೆದಿಲ್ಲ ಎಂದಾದಾಗ ಈ ಕಾರ್ಯಕ್ಕೆ ಪ್ರತಿಬಂಧಕವಾಗಿ ಏನೋ ಒಂದು ಇದ್ದೇ ಇರಬೇಕು. ಅದು ಅದೃಷ್ಟದ ಅಭಾವವಾಗಲು ಸಾಧ್ಯವಿಲ್ಲ. ಏಕೆಂದರೆ ದೃಷ್ಟಸಾಮಗ್ರಿಗಳನ್ನು ಒಗ್ಗೂಡಿಸಬೇಕಾದ ಅದೃಷ್ಟವು ಎಲ್ಲಾ ದೃಷ್ಟಸಾಮಗ್ರಿಗಳನ್ನು ಒಗ್ಗೂಡಿಸಿದೆ. ಇದು ನಿಶ್ಚಯವಾಗಿದೆ. ಹಾಗಾಗಿ ಜನಕಾದೃಷ್ಟ ಇಲ್ಲದೇ ಇಂತಹ ಕಾರ್ಯನಡೆದಿಲ್ಲ ಎಂದು ಹೇಳಲು ಬರುವುದಿಲ್ಲ. ಹಾಗಾಗಿ 'ನಾಪುತ್ರಸ್ಯ ಲೋಕೋಽಸ್ತಿ' ಇತ್ಯಾದಿ ಶ್ರುತಿಗಳಿಂದ ಅಪುತ್ರನಾದ ವ್ಯಕ್ತಿಗೆ ಶುಭಲೋಕಗಳು ಇಲ್ಲ. ಅರ್ಥಾತ್ ನರಕಾದಿ ಅನರ್ಥವಾಗುತ್ತದೆ ಎಂದು

